॥ श्रीः ॥

# अष्टाङ्गसंग्रहः

## इन्दुव्याख्यासहितः

(सूत्रशारीरस्थानात्मकः प्रथमो भागः)

गोश्री महाराजराजधानीभिषक्पदमधितिष्ठता

**टि. रुद्रपारशवेन परिशोध्य**

प्रकाशितः ॥


१०८८
1913

*(Copyright Registered)*

PRINTED AT K. K. PRESS OF THE MANGALODAYAM COMPaNY., LTD.,

TRICHUR.

॥ श्रीरस्तु ॥

# ॥ उपोद्घातः ॥

श्रिया विराजन् विबुधैकवन्द्यः श्रीपूर्णवेदाख्यपुरप्रदीपः ।
देवो जयेद्देवतरुश्श्रितानां श्रीरामवर्माख्यमहानृपश्च ॥

भो भो महितायुर्वेदमहाम्बुधिमथितुकामा महामतयः ॥

कुमुदमधिकं पुष्णन् रुद्रैकयत्नसमाहृत-
स्तिमिरनिकरध्वंसी साक्षान्महौषधिनायकः ।
विबुधनिवहान् गोभिः स्वाभिः परं परितर्पय-
न्नमितसुकृतादिन्दुर्भूमावुदेति मुदेऽस्तु वः ॥

सुविदितमेव विदुषामिदं सर्वेषां यदखिलानां वैद्यकतन्त्राणामायुर्वेदो निदानमिति ॥

अयमायुर्वेदस्तु चतुर्णामपि वेदानां सारभूत इति ब्रह्मवैवर्तादवगम्यते । यथा तत्रैव ब्रह्मखण्डे षोडशाध्याये ॥

ऋग्यजुस्सामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः ।
विचिन्त्य तेषामर्थञ्चैवायुर्वेदं चकार सः ॥ इति ।

चरणव्यूहमते तु ऋग्वेदस्योपवेद आयुर्वेदः अथर्ववेदस्य शस्त्रशास्त्राणि इति ॥

सुश्रुतप्रभृतयस्तु आयुर्वेदमथर्वोपवेदं ब्रुवते ॥

अस्यायुर्वेदस्य परं प्रयोजनं रोगोपसृष्टानां रुक्प्रतीकारः स्वस्थस्य स्वास्थ्यरक्षणञ्च ॥

अस्याष्टधा विभागः यथा शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यं अगदतन्त्रं रसायनतन्त्रं वाजीकरणञ्चेत्यंगभेदात् ॥

एवमङ्गैरष्टाभिस्त्रिविधा अपि चिकित्साः प्रतिपादिताः । चिकित्सायास्त्रैविध्यन्तु दैवा मानुषी आसुरी इति भेदात् । तत्र देवैर्महेश्वरादिभिरचिन्त्यप्रभावैर्योगिभिश्च प्रो-

क्ता या रसचिकित्सा सा दैवीति व्यपदिश्यते । सापि रसखण्डं प्रयोगखण्डं वादखण्डं रसायनखण्डं मन्त्रखण्डश्चेति पञ्चभिः खण्डैर्भिन्ना विराजति । तदिदं रसशास्त्रं नवमं किमप्यायुर्वेदस्याङ्गमामन्वते बहवो रसशास्त्रप्रणेतारः । मानुषी तु फलमूलकन्दादिप्रचुरप्रयोगापूर्वस्था अल्पायाससाध्या च । शस्त्रादिप्रधाना पुनरासुरीति ॥

उक्तैरष्टभिर्नवभिर्वाङ्गैरुपलक्षित आयुर्वेदस्स्वयंभुवा श्लोकलक्षेण अध्यायानां सहस्रेण च संहितारूपतामनायि ॥

लोकानुजिघृक्षावशंवदस्य भगवतः परमेष्ठिनः आयुर्वेदोपदेशविषये द्वेधा शिष्यपारम्परी दृश्यते ॥

तत्राद्या यथा । भगवान् स्वयंभूर्भास्कराय प्रथममायुर्वेदमुपादिक्षत् । भास्करः स्वनाम्ना संहिताश्चाकार्षीत् । तस्य पुनः षोडश शिष्या बभूवुः ते यथा ॥

धन्वन्तरिर्दिवोदासः काशीराजोऽश्विनीसुतौ ।
नकुलस्सहदेवोर्किश्च्यवनो जनको बुधः ॥
जाबालो जाजलिः पैलः करथोगस्त्य एव च ।

इति परिगणिताः । ते च प्रत्येकं संहिताश्च चक्रुः यथा चिकित्सातत्वविज्ञानं चिकित्सादर्पणं चिकित्साकौमुदी चिकित्सासारतन्त्रं वैद्यकसर्वस्वं व्याधिसिन्धुविमर्दनं ज्ञानार्णवः महातन्त्रं वैद्यसन्देहभञ्जनं सर्वसारः तन्त्रसारकं वेदाङ्गसारः निदानं सर्वधरं द्वैधनिर्णयतन्त्रं चिकित्साशास्त्रबीजश्चेति क्रमशो ज्ञातव्याः ॥

अपरा यथा । ब्रह्मणशिष्यः प्रजापतिः । प्रशिष्यावश्विनौ तयोश्शिष्य इन्द्रः । प्रशिष्या आत्रेयभरद्वाजप्रमुखा ब्रह्मर्षिप्रवराः । भगवान् धन्वन्तरिश्च । तेषामग्निवेशमुख्या महर्षयोन्तेवासिनः । धन्वन्तरेस्तु विश्वामित्रपुत्राः सुश्रुतप्रधानास्सप्त । ते तु स्वस्वनामानुस्यूतानि वैद्यकसंहितारत्नानि व्यरचिषुः । अथ कालेन अग्निवेशसंहिता चरकमुनेस्सन्निधानात्संस्करणमुपेयुषी उत्कर्षस्य परमां कामपि कोटिमापादयामास ॥

एवं सुश्रुतसंहितापि नागार्जुनेन केनचित् सिद्धप्रवरेण रसशास्त्रप्रथितप्रवक्त्रा प्रतिसंस्कृता सती समुन्नतस्थानमधिजगाहे ॥

आत्रेयः । असौ परमप्राचीनः यदुपज्ञमेव धरण्यां वैद्यकपरिज्ञानं अयं बुद्ध साक्षाद्गतप्राक्काले तक्षशिलास्थसर्वकलाशालायां प्रधानवैद्याध्यापको बभूवेति बुद्धचरित्रादवगम्यते । तथा च क्रिस्ताब्दे वि. सि. षष्टाद्वद्शतकान्नार्वाचीन इति निर्द्धार्येत । पर-

न्तु योगीश्वरस्यामुष्य कियान् वा जीवनकाल इति परिच्छेत्तुं को नाम शक्नुयात् । एवञ्च तच्छिष्याणामग्निवेशादीनामपि कालः परिचिन्तनीयः ॥

धन्वन्तरिः । अयन्तु नात्रेयात् प्राचीनः अस्थिविषये आत्रेयपक्षस्य क्रोडीकरणात् । किन्तु समकालीनस्सन्निहितकालीनो वा । यदुपज्ञमेव शस्त्रशास्त्रस्य प्रचारः । काशिस्थसर्वकलाशालायां बुद्धकालीनायां सुश्रुत एव प्रधानवैद्याध्यापकत्वेन न्ययोज्यमुना । अन्ये तु विक्रमार्कनृपतेर्नवरत्नान्तर्गतं कमपि धन्वन्तरिं ब्रुवन्ति तथा हि ॥

धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकाळिदासाः ।
ख्यातो वराहमिहिरो नृपतेस्सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥ इति ।

अयन्तु प्रकृतधन्वन्तरेरतीवार्वाचीनः । यतो दत्तादीनां चरित्रकाराणां सम्मतो विक्रमार्ककालः क्रिस्ताब्दे ए. डि. षष्ठे वत्सरशतक इति ॥

चरकः अयमादिशेषस्यावतारो महाभाष्यकर्ता पतञ्जलिः अमुष्य सत्ताकालस्तु क्रिस्ताब्दे बि. सि. द्वितीये वत्सरशतक इति दत्तादयश्चरित्रकाराः ॥

नागार्जुनः । अस्य तत्वतः कालं न जानीमः ॥

तानि संहितारत्नान्यपि "भिन्नरुचिर्हि लोकः" इति न्यायेन तत्तद्रुचितविषयप्रचुरावलम्बीन्यासन्निति एकैकतन्त्रस्य निखिलरुक्प्रतीकारानौपयिकत्वात् तन्त्रान्तराभियोगे पुरुषायुषसंक्षयाच्च संसीदतामेव लोकानां यातेषु केषुचन कालेषु अतिविप्रकीर्णेभ्यस्तेभ्यः सारतरसंग्रहप्रथनार्थमङ्गीकृतावतार इव साक्षात् स्वयंभूराविरभूदस्माकमाचार्यवाग्भट इति द्वितीया पारम्परी ॥

द्वादशसाहस्र्यपरपर्यायः श्रीमदष्टांगसंग्रहः, ततोऽपि सारतरोऽष्टांगहृदयाख्यग्रन्थः, । रसशास्त्रसर्वस्वभूतो रसरत्नसमुच्चयश्च यदीयधिषणाविलासे परं साक्षिणः ॥

वाग्भटः । अयमिन्द्रप्रस्थपश्चिमदिग्वर्तिमरुदेशनिकटवर्तिनं सिन्धुदेशमेव जन्मनालञ्चकार । अस्य जनकस्सिंहगुप्तः पितामहो वाग्भटः । तदिदमाचार्येणैव प्रत्यपादि पद्येनैकेन । यथा ॥

भिषग्वरो वाग्भट इत्यभून्मे पितामहो नामधरोऽस्मि यस्य ।
सुतोभवत्तस्य च सिंहगुप्तस्तस्याप्यहं सिन्धुषु लब्धजन्मा ॥ इति ।

अत्र केचित् श्रीमद्वाग्भटो ब्राह्मण एव । यतः परमपूज्येन हेमाद्रिणा हृदयव्याख्यानोपक्रमे "आयुर्वेदं व्याचिख्यासुः श्रीमद्वाग्भटाचार्यः प्रथमश्लोकेनेष्टदेव-

तां नमस्करोति रागादिरोगानिति" इत्येव मूलमवतारितम् । एवं धर्माधिकरणमहापण्डित-श्रीहेमाद्रिमुखादप्याचार्यपदवीं गतोयं भूदेव एव भवे"दिति ॥

अन्ये तु "पुरा किल वर्णधर्मविद्वेषिभिर्यवनैराक्रान्तेषु सिन्धुषु अनेकविद्वज्जन-मण्डितब्राह्मणस्थलानि विलयं गतानि । तदानीमस्मदाचार्योपि गत्यन्तरविरहात् परित्यक्त-ब्रह्मवर्चसो बुद्धमतावलम्बी असीत्" इति किंवदन्तीं प्रमाणयन्ति ॥

अपरे तु "यत एकादशीदिने व्रतविघातभीता आचार्यग्रन्थान्न पठन्ति पाठयन्ति च तत् बौद्धेनैव भाव्यमाचार्येणे"ति वदन्ति ॥

वयन्तु आचार्यस्य बौद्धत्वे पुनस्तदीयोक्तीरेव प्रमाणयामः । यस्मादाचार्येणे अष्टांगसं-ग्रहे हृदये च सूत्रस्थाने वमनविरेचनविधौ भैषज्यस्य मन्त्राभिमन्त्रणे, "ॐ नमो भगवते भैष ज्यगुरवे"त्यादिना सौगतो मन्त्रो विहितः । एवं शारीरस्थाने गर्भावक्रान्तीये सत्वविशेषकराणां प्रसंगे सुसत्वादीनां श्रुतय" इत्यनेन बुद्धसंबन्धिश्रुतिप्रकीर्तनम् । अथ चिकित्सितस्थाने कु-ष्ठप्रतिषेधे "जिनजिनसुतताराभास्करराधनानि" इत्यनेन जिनतत्सुतयोराराधनस्य कुष्ठनाशने प्राधान्यकथनम् । तत उत्तरस्थाने भूतप्रतिषेधे "ईश्वरं द्वादशभुजन्नाथमार्यावलोकित"मि-त्यनेन आर्यावलोकिताख्यबुद्धोपासनस्य ग्रहप्रतिषेधकत्वकथनं" तत्रैव वाजीकरणे उपसंहारघट्टे "समधिगम्य गुरोरवलोकितात्" इत्यनेन बुद्धस्यादिगुरुत्वप्रतिपादनञ्चेति ॥

किञ्च बुद्धसन्यासिनमेनं साक्षात् प्रदर्शयतीव चायं श्लोको लोकप्रसि-द्धः । यथा ॥

> लंबश्मश्रुकञ्जापमंबुजनिभच्छायाशुतिं वैद्यका-
> नन्तेवासिन इन्दुजज्जटमुखानध्यापयन्तं सदा ।
> आगुल्फामलकञ्चुकाञ्चितदरालक्ष्योपवीतोज्वलत्
> कण्ठस्थागरुसारमाञ्जितदृशं ध्याये दृढं वाग्भटम् ॥ इति ।

तस्मादयं सर्वथा बुद्धमतावलम्ब्येव ॥

तथापि न च वैदिकधर्मविद्वेष :स्वल्पोप्यमुष्य । यतो वैदिका मन्त्रा धर्माश्च भूयिष्ठं प्रतिपादिताः । यथा । पूर्वोक्तमन्त्राभिमन्त्रणे ब्रह्मदक्षेत्यादिर्वैदवादी मन्त्रः एवं तत्र तत्र दृश्यते । "अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन्"इत्यादौ बहुत्र वैदिका धर्माश्चेति ॥

मंगळश्लोकशैलीसाम्येन अन्यतन्त्रसंग्रहणे पुनरनन्यसाधारण्या नैपुण्या नाम-

लिङ्गानुशासनकर्तुरपि बौद्धत्वे युक्तीनां निष्प्रत्यूहतया च श्रीमद्वाग्भटामरसिंहयोरेकगोत्रतैव साधीयसीत्यस्माकमभिसन्धिः । तयोस्तु पौर्वापरीभावः परमलोचनार्हः ॥

अत्र जर्मन्महाभागास्तु क्रिस्ताब्दे ए. डि. द्वितीये वत्सरशतके श्रीमद्वाग्भटस्य कालं, ए. डि. चतुर्थे वत्सरशतके अमरसिंहस्य कालञ्च ब्रुवन्ति ॥

पूर्वोक्तेष्वाचार्यवैद्यकग्रन्थेषु प्रायशोऽष्टांगहृदयमेवाधीत्य चिकित्सायां प्रवर्तन्तेऽल्पसमुद्यमाः नैव एषा रीती रोचते श्रीमदाचार्याय । किन्तु संग्रहार्थबोधसक्तस्य स्वभ्यस्तकर्मण एव पुंसस्तत्राधिकारः "एतत् पठन् संग्रहबोधसक्तः स्वभ्यस्तकर्मा भिषगप्रकम्प्यः" इत्यादि वदताचार्येणैव अष्टांगहृदयोपसंहारघट्टे प्रत्यपादि । श्रीमदष्टांगसंग्रहार्थस्तु कामपि समीचीनां दीपिकामन्तरा परिज्ञातुं दुःशक इति स्थिते अयमिन्दोरुदयः परमप्रमोद एव निखिलप्रपञ्चस्य ॥

इन्दुः अयमाचार्यवाग्भटशिष्येषु प्रधानः । तदुक्तम् । ध्यानश्लोके । "इन्दुजज्जटमुखानध्यापयन्त"मिति । अनेन अष्टांगसंग्रहस्य हृदयस्य च शशिलेखेति व्याख्यातन्यत । इन्दुनाम्नापि सा व्यपदिश्यते ॥

जीर्णजीर्णेषु ग्रन्थसागरेषु विलयं जिगमिषोरस्येन्दोरुद्धरणे दृढपरिश्रमास्तावदस्मद्गुरुचरणा एव । इमे खल्वगाधसत्वा बहुभ्यः संवत्सरेभ्यः प्रागेवेन्दुग्रहणार्थमाहितव्यवसायाश्चारान् दूतान् लेखनानि च तेषु तेषु विदुषां निकाय्येषु प्रेषयन्तः स्वयमपि गवेषयन्तो दुरवबोधाक्षरान् जीर्णतमान् कानपि तालग्रन्थान् केरळप्रतिष्ठानामष्टवैद्यानां ग्रन्थागारेभ्यो राजकीयग्रन्थशालायाश्च कृच्छ्रादुपादायावलोकितुमुपाक्रामन्त । जीर्णेषु भागेष्वजीर्यत्ग्रन्थान्तरतत्भागसंयोजनेन तत्र तत्र विप्रतिपत्तौ महाराजपादानां, एवं महाराजसभालङ्करणभूतमहामहोपाध्यायभट्टश्रीगोदवर्मराजप्रमुखानां महापण्डितानामपि साहाय्यकमवलम्ब्य स्वयमपि बहुभिर्भिषग्भिः समं पर्यालोच्य स्वालित्यमपाकृत्य नवं कमपि परिशुद्धं विलिखितुं विगळितवेद्यान्तरमुद्यतमानानामेवैषां दश संवत्सरा व्यतीयुः । अत एव प्रकाशपदवीमभियात्ययमिन्दुः हन्त हन्त लोकक्षेमैकपरिणतिर्महतां व्यवसितिः । सर्वेपीन्दुग्रन्था नैकत्र जीर्णा इत्ययं लोकानां भाग्यमहिमा ।

बह्वीष्वपि विवृतिषु विद्यमानासु अन्धकारस्था इवान्तर्द्धिमुपयाता बहवो विषया हृदये विद्यन्ते । ते यथा । "यथापक्षी परिपतान्नि"त्यादावुपमाद्वयफलं, "तास्सप्त सप्त चाधाराः," "दीप्तां प्रतिदिशं वाच." इत्यादावर्थः "सूतिका क्षुद्वती तैलात् घृताद्वा महतीं पिबेत्," "सज्वरं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु," इत्यादौ पूर्वापरविरोधपरिहारः, "एला मृणाळागरुभिः" इत्यादावकारप्रश्लेषः, "पिबेन्निकुम्भकल्कं वा द्विगुडं शीतवारिणा" इत्यादौ णकारपाठे समापतितो महांश्चिकित्सादोषाः, "शृतशीतश्च शताम्बु-

युक्तमन्तरपानकं" इत्यादौ सारार्थः, "द्राक्षामधूकवारिभ्यां" इत्यादौ योगभेदः एवमादयो गूढतरास्सारार्थाः गुरूपदेशमात्रलभ्या महौषध्यश्च सुतरामत्र प्रतिपादिताः । अष्टाङ्गसंग्रहस्य तु न काचिदन्या व्याख्या श्रुतपूर्वा च भवति ॥

तस्मादियं व्याख्या वैद्यकजिज्ञासूनां वस्तुपरिज्ञानाय अत्युपयुक्ता लोकोत्तरा च विराजति नैतस्यां कुत्रापि सन्देहावकाशो वाचि । प्रत्युत आचार्यमुखादेव सम्यगाशयमवगत्य विरचितेति । तदीयाशयं मात्रयापि न व्यभिचरेदेवेति सर्वेषां विदुषां परितृप्तये परमलं भवेच्च ॥

इति निश्चित्य श्रीपुरवास्तव्यपार्वतीतनूजैः । (एळेटत्ततकाटमूस्स्) इत्युपनामककेरळीयाष्टवैद्यकाग्रेसरराविशर्मपादानामन्तेवासिभिः श्रीमद्गोश्रीमहाराजप्राणाचार्यपदमधितिष्ठद्भी रुद्रदेवदासैरस्मदुपाध्यायपादैः श्रीपूर्णत्रयीशकृपया जि. सि. एस्स्. ऐ. जि. सि. ऐ इ. इति पदाधिष्ठितगोश्रीरामवर्ममहाराजकृपया च शिवपुरस्थमंगळोदयजनतासनाथीकृतमुद्राक्षरशालायां मुद्रयित्वा संप्रति शारीरस्थानपर्यन्तं प्रकाशपदवीमनायि । अन्यान्यपि स्थानानि प्रकाशयिष्यन्ते क्रमशः । एवमेव विनश्यदवस्थानामत्युत्तमानामितरेषामपि वैद्यकग्रन्थानामातङ्कपङ्कमग्नानामिव नित्योत्तरणेन भुवनमनुगृह्णन्तो भवन्त्वस्मदाचार्यपादाः । पूर्णत्रयीपुरमधितिष्ठतो भगवतः कारुण्यवीक्षायाः परं पात्रीभवन्तु च । इत्यन्वहमाशास्महे वयं इति ॥

अन्तेवासिनामेकः इक्कण्डत्त, राघवदेवदासः ॥

तमिमं मदीयं प्रयत्नातिशयमनुचिन्तयन्तो मुद्रायोजकादिप्रमादापतितान् सतोपि दोषानेतन्मुद्रणस्य प्राथम्यबुध्या अविचारयन्तः सदयमिदं पुस्तकं स्वीकुर्वन्तो मुद्रापयिष्यमाणानि पुस्तकानि स्वीकरिष्यन्तश्च मम साहाय्यं विदध्युस्तत्रभवन्तः पण्डिताः इत्यभ्यर्थये । इति शिवम् ॥

द्विजाधिराजस्य निधेः कलानां लेखेयमिन्दोः परिपीयमाना ।
बुधैर्निगूढान् विविधान् पदार्थान् विबोधयन्ती विजयेत नित्यम् ॥

प्रायो ग्रन्थार्थतत्वग्रहणविरळता हन्त पाश्चात्यवैद्य-
प्रायो लोकोऽपि जातस्तदिह विकलतां हर्तुकामस्य नित्यम् ।
भूयो भूयोऽपि गोश्रीरमणकरुणया वैद्यकप्रेमभाजां
श्रेयोबन्धाय भूयान्मम तु पुनरयं यत्नसन्तानतन्तुः ॥

इति प्रक्रान्तो रुद्रदेवदासः ॥

# श्रीमदष्टाङ्गसङ्ग्रहः सटीकः

## सूत्रस्थानम्

श्रीमहागणपतये नमः

**रागादिरोगास्सहजास्समूला**
**येनाऽशुसर्वे जगतोऽप्यपास्ताः ।**
**तमेकवैद्यं शिरसा नमामि**
**वैद्यागमज्ञांश्च पितामहादीन् ॥ १ ॥**

श्रीरभासिस्वच्छशंखस्फुटशशिशकलोद्दामवैशद्यहृद्य-
श्रोद्यत्सौन्दर्यवर्यप्रकटितवपुषन्नौमि वागीश्वरीन्ताम् ।
कल्लोलोल्लासशान्तिप्रततसिततरक्षीरसिन्ध्वन्तराळ-
श्लिष्यत्पीयूषरेखां स्मरयति विबुधान्ध्यायतो या दयालुः ॥

सरसि सुविपुलायुर्वेदरूपेकृतास्थं
मुनिवरवचनौघे दीर्घनाळे निबद्धम् ।
रचितदलमिवाङ्गैस्संग्रहाख्यं सरोजं
विकसति शशिलेखाव्याख्ययेऽन्दोर्यथावत् ॥

अनालोचिततन्त्रार्थः पदादावकृतश्रमः ।
यत्रावभाषते मूर्खस्तत्राऽवाच्या विपश्चितः ॥

बन्धच्छायाविशेषज्ञस्सूक्ष्ममप्यधिगच्छति ।
सुकवेरपि या वाचः कुण्ठास्ता जळसंसदि ॥

कियद्वा कथयिष्यामि यत्सतत्वैर्नबुध्यते ।
प्रमाणञ्च तदेवात्र यदस्माभिर्निरूप्यते ॥

दुर्व्याख्याविषसुप्तस्य वाहटस्याऽस्मदुक्तयः ।
सन्तु संवित्तिदायिन्यस्सदागमपरिष्कृताः ॥

सोऽयं वाहटनामा शास्त्रकारः लोकहिताय शास्त्रमारिप्सुर्विघ्नोपशमायाऽभिमतदेवतानमस्कारं करोति रागादीत्या दिना ॥ रागादिरोगा येनापास्तास्तन्नमामीति संबन्धः । रागादयः प्रसिद्धाः । राग आदिर्येषान्त इमे रागादयः । आदिग्रहणेन द्वेषादीनां परिग्रहः । रुजन्तीति रोगाः रागादयश्च ते रोगाश्च रागादिरोगाः । सह जातास्सहजाः जन्मनः प्रभृति शरीरिणा संगताः । समूला येनाऽपास्ताः । मूलमेषामज्ञानम् । आशु शीघ्रमेव । सर्वे न तु कोचिदेव । जगतोऽपि नाऽत्मन एव । तमेकवैद्यन्नमामि । एकश्चासौवैद्यश्च तन्नमामि । एवंगुणयुक्तस्यान्यस्य भिषजोऽभावात्तस्यैकत्वं । न ह्यन्यो वैद्यस्सहजत्वाद्यसाध्यलक्षणयुक्तान्रोगाञ्जेतुं शक्नोति ॥ अभिमतदेवतानमस्कारंकृत्वा विघ्नोपशमायैव पुनर्गुरुनमस्कारं करोति वैद्यागमज्ञांश्च पितामहादीनिति । वैद्यानामागमो वैद्यागम आयुर्वेदस्तञ्जानन्तीति वैद्यागमज्ञाः । आदिग्रहणेन दक्षप्रजापत्यादीनां ग्रहणम् ॥

**अथात आयुष्कामीयन्नामाध्यायं व्याख्यास्यामः । इतिह स्माऽहुरात्रेयादयो महर्षयः ॥**

अथ नमस्कारंकृत्वा तन्त्रं प्रस्तौति अथात इत्यादि ॥ अथेति मंगलार्थः । अत इति नमस्कारादानन्तर्ये । आयुष्कामेभ्यो हित आयुष्कामीयः । आयुष्कामशब्दोऽत्रास्त्यध्याय इति वा आयुष्कामीयः । अध्यायइति विशिष्टप्रकरणनाम । व्याख्यास्यामो वर्णयिष्यामः । इतिहस्माऽहुरित्यादिना न स्वमनीषाकारितेति द्योतयति । इतिहेतिनिपातसमुदायोऽत्रातिव स्तुविषयः । आहुःस्म ब्रुवन्ति स्म 'लट्स्म'इति भूते लट्प्रयोगः । आत्रेयादयो महर्षयः । आदिशब्देन भरद्वाजादीनां परिग्रहः । महान्तश्च ते ऋषयश्च महर्षयः । महत्वन्तु ज्ञानाद्यतिशययोगात् पूज्यता ॥

**आयुः कामयमानेन धर्मार्थसुखसाधनम् ।**
**आयुर्वेदोपदेशेषु विधेयः परमादरः ॥**

किमाहुः? आयुः कामयमानेनेत्यादि । अनेनाऽयुर्वेदतत्वाधिगमार्थं शिष्यगणंप्रोत्साहयति । आयुःकामयमानेन यथोचितञ्जीवितमरोगमिच्छता । आयुर्वेदोपदेशेषु यैरुपायैरायुर्वेद उपदिश्यते तेषु । परमादरो विधेयः । किंभूतमायुः? धर्मा-

दिसाधनं । न हि प्राधान्येन धर्मादयस्साध्यन्ते । अनेन संबन्धादीन्यप्युक्तानि भवन्ति । अत्रोपायोपेयभावलक्षणस्संबन्धः । अस्य तन्त्रस्याऽयुर्वेदोपदेशत्वादुपायत्वं । तत्साध्यत्वादायुष उपेयत्वं । अभिधेयमायुर्वेदः । प्रयोजनमायुः धर्मार्थसुखानि-चेति ॥

**आयुर्वेदामृतं सार्वं ब्रह्मा बुध्वा सनातनम् ।**
**ददौ दक्षाय सोऽश्विभ्यां तौ शतक्रतवे ततः ॥**
**धर्मार्थकाममोक्षाणां विघ्नकारिभिरामयैः ।**
**नरेषु पीड्यमानेषु पुरस्कृत्य पुनर्वसुम् ॥**
**धन्वन्तरिभरद्वाजनिमिकाश्यपकश्यपाः ।**
**महर्षयो महात्मानस्तथा लंबायनादयः ॥**
**शतक्रतुमुपाजग्मुश्शरण्यममरेश्वरम् ।**
**तान्दृष्ट्वैव सहस्राक्षो निजगाद यथागमम् ॥**
**आयुषः पालनं वेदमुपवेदमथर्वणः ।**
**कायबालग्रहोर्ध्वांगशल्यदंष्ट्राजरावृषैः ॥**
**गतमष्टांगतां पुण्यं बुबुधे यं पितामहः ।**
**गृहीत्वा ते तमाम्नायं प्रकाश्य च परस्परम् ॥**
**आययुर्मानुषं लोकं मुदिताः परमर्षयः ।**
**स्थित्यर्थमायुर्वेदस्य तेऽथ तन्त्राणि चक्रिरे ॥**
**कृत्वाऽग्निवेशहारीतभेळमाण्डव्यसुश्रुतान् ।**
**कराळादींश्च तच्छिष्यान् ग्राहयामासुरादृताः ॥**
**स्वं स्वं तन्त्रं ततस्तेऽपि चक्रुस्तानि कृतानि च ।**
**गुरून् संश्रावयामासुस्सर्षिसंघान्सुमेधसः ॥**
**तैः प्रशस्तानि तान्येषां प्रतिष्ठां भुवि लेभिरे ।**

संबन्धादीन्युक्त्वा आगमशुद्धिन्दर्शयति आयुर्वेदामृतमित्यादिना । अनेन गुरुपरंपरामपि दर्शयति । ब्रह्मा पद्मयोनिरायुर्वेदामृतं बुध्वा दक्षाय ददौ । यथाऽमृतेन सकलरोगपरिक्षयस्तथैव आयुर्वेदेनेत्यतस्सादृश्यम् । सर्वेभ्यो हितं सार्वम् । सनातनमविनाशि । स दक्षोऽश्विभ्यां देवभिषग्भ्यां ददौ । तावश्विनौ शतक्रतवे इन्द्राय ददतुः । ततोऽनन्तरमायुर्वेदज्ञानपरिपूर्णे शतक्रतौ धर्मादिचतुर्वर्गविघ्नकारिभिरामयैः पीड्यमानेषु सत्सु नरेषु सकलजनरोगोपशमहेतोर्महर्षयश्शतक्रतुमुपाजग्मुरुपाविशन् । यत एव शरण्यस्ततः । अमराणामीश्वरं देवनायकं । महती ऋद्धिर्येषां ते महर्धयः । महर्धयो धन्वन्तरिप्रभृतयः । न केवलं धन्वन्तरिप्रभृतयः याबल्लंबायनादयोऽपि । तान् धन्वन्तरिप्रभृतीन्दृष्ट्वैव सहस्राक्षो यथाऽऽगममभिजगाद आगममनतिक्रामंस्तेभ्यः कथयाञ्चकार ॥ किमित्याह आयुषः पालनं जीवितस्य रक्षणं । उपवेदमथर्वणः अथर्ववेदस्योऽपवेदं । कीदृशमायुर्वेदाभिजागादेत्याह कायेति । कायादिभिरष्टांगतां गतं । यं पितामहो बुबुध इति संबन्धः । कायचिकित्सा कायशब्देनोच्यते । एवं बालादिष्वपियोज्यम् । बालस्य विशेषवक्तव्यत्वात् पृथक्करणं । एवमन्येष्वपि । वृषं वाजीकरणं । यथाभूतमेव ब्रह्मणा बुद्धं तथाभूतमेव तेषां ज्ञानमित्यर्थः । ते च धन्वन्तरिप्रभृतयस्तमाम्नायं शतक्रतुप्रोक्तमागमं गृहीत्वा मयैवमज्ञायि मयैवमज्ञायीति परस्परं प्रकाश्य च मानुषं लोकमाययुः प्रापुः । किंभूताः मुदितास्संपन्नकार्यत्वात्सहर्षाः । आगत्य च मानुषं लोकमायुर्वेदस्य स्थित्यर्थं आयुर्वेदो मा नश्यादिति तन्त्राणि चक्रिरे अकुर्वन् । ततस्तानि तन्त्राणि कृत्वा आदृतास्सादरं पुनर्वसुधन्वन्तरिप्रभृतयोऽग्निवेशादिकान् सुश्रुतान्तानाधिगमयामासुः । न केवलमग्निवेशादीन् यावत्तच्छिष्यान् कराळादीनपि ग्राहयामासुः । तेऽप्यग्निवेशादयः धन्वन्तरिप्रभृतिभ्यस्तानि तन्त्राणि गृहीत्वा स्वयं तन्त्रं चक्रुः । ततश्च स्वयंकृतानि तन्त्राणि गुरून् धन्वन्तरिप्रभृतीन् संश्रावयामासुः । किंभूतान् गुरून्? सर्षिसंघान् समुनिसमूहान् । किंभूता अग्निवेशादयः? सुमेधसः सुप्रज्ञाः । तानि च तन्त्राण्येषामग्निवेशादीनां । तैर्धन्वन्तरिप्रभृतिभिः । प्रशस्तानि कृतप्रशंसानि । प्रतिष्ठां सुपूज्यां स्थितिं । भुवि मनुष्यलोके । लेभिरे प्रापुः ॥

**तेषामेकैकमप्यापि समस्तव्याधिसाधने ॥**
**प्रतितन्त्राभियोगे तु पुरुषायुषसंक्षयः ।**
**भवत्यध्ययनेनैव यस्मात् प्रोक्तःपुनः पुनः ॥**
**तन्त्रकारैस्स एवाऽर्थः कचित् कश्चिद्विशेषतः ।**
**तेऽर्थप्रत्यायनपरा वचने यत्न नादृताः ॥**

इत्यनेन ग्रन्थसन्दर्भेणाऽऽगमशुद्धिं दर्शयित्वा स्वयं तन्त्रकरणे हेतुमाह तेषामिति ॥ तेषामग्निवेशादिप्रणीतानान्तन्त्राणां एकैकं तन्त्रं समस्तव्याधिसाधने सकलरोगचिकित्सिते अ-

न्यापि असंपूर्णं । न हि सुश्रुतप्रणीता काचिच्चिकित्सा अग्निवेशकृते तन्त्रे ज्ञाते ज्ञाता भवत्यतः प्रतितन्त्राभियोगे तु अध्ययनमात्रेणैव पुरुषायुषसंक्षयो भवति न हि तदुक्तविधानानुष्ठानस्याऽपुर्भवत्यतः यस्माच्च सुखग्रहणार्थं लोकस्य एक एवार्थस्तन्त्रकारैः पुनःपुनः प्रोक्तः य एवैकेन प्रोक्तस्सएवान्येन । न केवलमेवं यावत् क्वचिच्च तन्त्रे कश्चिदर्थो विशेषतः अन्येन विशेषेणोक्तः अतस्तद्विज्ञानमतिदुर्लभम् । यच्च यस्माच्च ते तन्त्रकृतो विशेषेतार्थव्याख्यानपरत्वाद्वचने शब्दे अनादृता अवहेळावन्तः वचनस्य स्वल्पत्वबहुत्वनिरपेक्षाः । अर्थादरेण बहुभाषिण इत्यर्थः ॥

**सर्वतन्त्राण्यतः प्रायः संहृत्याऽष्टांगसंग्रहः ।**
**अस्थानविस्तराक्षेपपुनरुक्तादिवर्जितः ॥**
**हेतुलिंगौषधस्कन्धत्रयमात्रनिबन्धनः ।**
**विनिगूढार्थतन्त्राणां प्रदेशानां प्रकाशकः ॥**
**स्वान्यतन्त्रविरोधानां भूयिष्ठं विनिवर्त्तकः ।**
**युगानुरूपसन्दर्भो विभागेन करिष्यते ॥**

अतोऽपिहेतोस्सर्वतन्त्राणि संहृत्याऽष्टांगसंग्रहः करिष्यत इति संबन्धः । किंभूतोऽष्टांगसंग्रहः अस्थानविस्तरादिवर्जितः । उचिते पुनःस्थाने विस्तरादीनि विधीयन्त एव । तथाहि ऋतुस्वरूपवर्णने दोषोपक्रमणे च स्वस्थातुराहितत्वाद्विस्तरोऽप्युपयुज्यत एव । तथा गर्भोपक्रान्त्यंगविभागादिष्वाक्षेपोऽपि दृश्यते । तथाऽतियोगादिप्रकरणे पुनरुक्तमपीति । अन्ये पुनराहुः । अन्यत्रवक्तव्यमर्थवस्त्वन्यत्रोऽच्यत इत्यस्थानं तद्वर्जितः । तथाविस्तराक्षेपाभ्यां वर्जितः नातिविस्तरो नातिसंक्षिप्त इत्यर्थः । सकृत् ज्ञापितस्य वस्तुनः पुनर्वचनं पुनरुक्तिस्तद्वर्जितः । अन्यच्च हेत्वादिस्कन्धत्रयमात्रनिबन्धनः हेतूरोगोत्भवकारणं स्कन्धस्समूहः हेतुस्कन्धो मिथ्याहाराविहारादिः । लिंगं भविष्यतस्सतश्च व्याधेश्चिन्हभूतं । यथा ज्वरस्यालस्यादिः । औषधस्कन्धो रोगचिकित्सार्थं हिताशनचूर्णलेहकाथादिः । संप्राप्तेर्हेतुस्कन्धएवाऽन्तर्भावः । उपशयः पुनः लिंगस्कन्धे वा औषधस्कन्धे वाऽनुप्रविशति । एव मन्यदप्यस्मिन्नेव स्कन्धत्रयेऽन्तर्भाव्यम् । एतावन्मात्रमत्र निबध्यत इत्यर्थः । मात्रशब्दस्तोकपर्यायः अन्यतन्त्रेषु यथा बहुवक्तव्यता न तथाऽत्र किन्तु केवलं तात्पर्यवस्तुग्रहणमिति मात्रशब्दप्रयोगः । अन्यच्च किंभूतोऽष्टांगसंग्रहः? अन्यतन्त्रेषु विनिगूढार्थतया ये प्रदेशास्तेषां प्रकाशकः । तथा चरकमुनिना षष्टिकस्य गुणेषु 'स्निग्धो गुरुश्चे'ति सन्धानके अकारप्रयोगः कृत इति वाहटेन दर्शयता लघुशब्दप्रयोगः कृतः । सुश्रुतोप्याह 'षष्टिकः प्रवरस्तेषां कषायम धुरो लघु'रिति । कृष्णात्रेयोपि - 'षष्टिकस्सुकर' इत्यादि पठित्वा लघवः कटुपाकाश्चेत्याह । खरनादोऽप्याह - 'दोषघ्नष्षष्टिकोलघु'रिति । पराशरोऽपि 'रक्तो महान्शकुनाहृतष्षष्टिक' इत्यादि पठित्वा लघवस्संग्राहिका इत्याह । चरकेऽपि पठ्यते - 'शालिषष्टिकादीनि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ती'ति । अन्यच्च स्वतन्त्रविरोधानामन्यतन्त्रविरोधानां च भूयिष्ठमातिशयेन निवर्तकः स्वतन्त्रविरोधो य एकस्मिन्नेव तन्त्रेऽन्यस्थानास्थितो ग्रन्थोऽन्यस्थानस्थितेन विरुध्यते । यथा चरके 'चतुर्विंशतिरित्येता स्नेहस्य प्रविचारणा' इत्युक्त्वा पुनरप्याह 'एवमेषां चतुष्षष्टिः स्नेहानां प्रविचारणा' इति । तद्वाहट एकीकुर्वन्नाह 'युक्त्यावचारयेत् स्नेह'मित्यादि । भक्ष्यादिनोपयुज्यमान एव रसभेदेन त्रिषष्टिधा स्नेहो भवति एकत्र इति चतुष्षष्टिः । एतच्च सम्मोहनमात्रनिवृत्तये उक्तं न हि वस्तुतो विरोधस्संभवति । परतन्त्रविरोधो यथा चरकग्रन्थेन कृष्णात्रेयोविरुद्धः । तथा चरको हिमवत्प्रभावानां नदीनां पथ्यत्वमिच्छति । कृष्णात्रेयसुश्रुतौ तासामेव गळगण्डादिकर्तृत्वं । वाहटस्तु'वलाहकालने'त्यादिना विरोधं निवर्तयति । एवमन्यत् ग्रन्थगौरवभयान्न लिख्यते । विनिवर्त्तको विनाशकः अर्थानां सुबोधकत्वात् । तथा युगानुरूपसन्दर्भः अस्मिन् कलियुगे पाठावबोधधारणयोग्यग्रन्थसंभारः । विभागेन शोभनैरर्थप्रकरणादिविच्छेदैः ॥

**नित्योपयोगि दुर्बोधं सर्वांगव्यापि भावतः ।**
**संगृहीतं विशेषेण यत्र कायचिकित्सितम् ॥**

तथा यत्र चाष्टांगसंग्रहे कायचिकित्सितं विशेषेणातिशयेन संगृहीतम् । किंभूतमित्याह नित्योपयोगि सततं शरीरिणा उपयुज्यते । दुःखेन च बोद्धुं शक्यत इति दुर्बोधं न ह्यकृतप्रयत्नस्तज्जानातीत्यर्थः । तथा भावतस्तत्वतः सर्वांगानां व्यापकं । कायचिकित्सांगमेकं वर्जयित्वा सप्त सर्वशब्दसंगृहीतानि । तथा च बालचिकित्सायां वक्ष्यते क्षीरदोषजनितरोगप्रसंगे 'यथास्वलिंगा'नित्यादि । तथा ऊर्ध्वांगरोगचिकित्सायां 'सर्वरोगनिदानोक्तै'रित्यादि । अत एव कायचिकित्सितस्य व्यापकत्वम् । यतश्च द्रव्यरसादिमात्राशितावस्थरूपादिपरिज्ञानस्नेहाद्यप्रयोगासंगिकरोगचिकित्सादितन्त्रानामप्यंगानां कायचिकित्सितमेव । अस्य च ग्रन्थसन्दर्भस्य संग्रहसंज्ञाऽर्थानुगता तेन खरनादसंहितावच्चरकादिन-

यन्व्याख्यानतात्पर्यमत्र विपरीतावगमसंभावनाभयान्न क्रियत इति ॥

**न मात्रामात्रमप्यत्र किञ्चिदागमवर्जितम् ।**
**तेऽर्थास्स ग्रन्थबन्धश्च संक्षेपाय क्रमोऽन्यथा ॥**

अनन्तरग्रन्थोक्तार्थमेव प्रकटीकुर्वन्नाह न मात्रेत्यादि । मात्राऽक्षरकला । अक्षरकलामात्रमप्यत्र न किञ्चिदागमवर्जितं कथितमिति । त एवार्थास्स एव ग्रन्थबन्धः । केवलं संक्षेपार्थमन्यः क्रम आश्रितः ॥

**वायुः पित्तं कफश्चेति त्रयो दोषास्समासतः ।**
**प्रत्येकं ते त्रिधा वृद्धिक्षयसाम्यविभेदतः ॥**
**उत्कृष्टमध्याल्पतया त्रिधा वृद्धिक्षयावपि ।**
**विकृताविकृता देहं घ्नन्ति ते वर्त्तयन्ति च ॥**

आयुर्वेदागमशुद्धिं दर्शयित्वा आत्मन आगमपरतन्त्रतावानन्तरं तन्त्रमारभते । तन्त्रञ्चायुषः पालनं । आयुर्जीवितं । तच्च शरीरसंबद्धम् । शरीरञ्च दोषधातुमलसमुदायः । तेषाञ्च धात्वादीनां दोषा एव प्रधानं यतो दोषेभ्य एव धातूनां प्रवृत्तिः । तथाच धातुपोषाय रसस्य वहनपाकस्नेहकाठिन्यादि दोषप्रसादलभ्यमेव । अतस्त एव पूर्वमुच्यन्ते वायुरित्यादि । उद्देशादेवाधिगते त्रित्वे पुनस्त्रिग्रहणं नियमार्थम् । त्रय एव दोषा न चतुर्थोऽस्ति । यथा सुश्रुतोक्ताविति नियमयति । समासतस्संक्षेपतः न संसर्गभेदादिविस्तरेण । विस्तरतस्तु बहवः । दूषणात्मकत्वाद्दोषाः । ते च वातादयः प्रत्येकं त्रिधा त्रिप्रकाराः । कथं त्रिप्रकारा अत आह प्रत्येकं वृद्धिक्षयसाम्यविभेदात् वायुर्वृद्धः वायुः क्षीणः वायुस्सम इति । एवं पित्तकफयोरपि वाच्यं । तेषाञ्च प्राकृतस्वरूपमपेक्ष्य वृध्यादिगतिर्विज्ञेया । वृद्धिक्षयावपि पुनरुत्कृष्टत्वादिना त्रिधैव उत्कृष्टा वृद्धिर्मध्या वृद्धिरल्पा वृद्धिरेवं क्षयेऽपि वाच्यं । साम्ये तूत्कर्षाद्यसंभवान्न भेदः । ते वातादयः विकृताविकृता देहं घ्नन्ति वर्त्तयन्ति च । विकृताः स्वरूपाच्चलिताः शरीरं घ्नन्ति नाशयन्ति । अविकृताः स्वरूपादचलितास्शरीरं वर्त्तयन्ति ॥

**ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ।**

ननु वातादयः किं नियतदेशा आहोस्विद्व्यापिनोऽत आह तइति । ते दोषा व्यपिनोऽपि सकलशरीरचरा अपि प्रतिनियतदेशाः । कः कस्य देश इत्यत आह हृन्नाभ्योरिति । अस्यायमर्थः नाभेरधो वायोः स्थानं हृन्नाभ्योर्मध्ये पित्तस्य हृदयादूर्ध्वे श्लेष्मण इति ॥

**वयोहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ॥**

न केवलं शरीरव्यापिनस्सन्तो नियतदेशा यावत्सकलकालव्यापिनोऽपि नियतकालाः । एतत्प्रदर्शनार्थमाह वय इति । अन्तादीनां वातादिभिर्यथासंख्यं संबन्धः । वयसः पुरुषायुषस्य अन्तःपश्चिमोभागो वायोः कोपकालः । मध्यभागः पित्तस्य । पूर्वभागःश्लेष्मणः । अन्होऽप्येवं रात्रेश्च । भुक्तं निर्गीर्णआहारः । तस्यान्तो जीर्णप्रायावस्था वायोः कोपकालः । मध्यं विदाहावस्था पित्तस्य । पूर्वावस्था भुक्तमात्रएवान्ने श्लेष्मणः ॥

**तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निस्समैस्समः ।**

तैश्च वातादिभिः पुरुषस्याग्निश्चतुर्विधो भवति । न ह्येकेनापि दोषेण हीना वातादयश्शरीरजनने समर्थाः । अवश्यञ्च सर्वैरेव भवितव्यं । यश्चैषामेकव्यपदेशस्स उत्कर्षकृतः वातोत्कर्षेण विषमः पित्तोत्कर्षेण तीक्ष्णः कफोत्कर्षेण मन्दः समैर्हीन्युत्कर्षवर्जितैस्समः । विषमादीनां लक्षणं शारीरे वक्ष्यते । यत्र तु द्वावुत्कृष्टौ तत्र भिषजा स्वबुध्या परिकल्पनीयः । वयं दिशं दर्शयामः । द्वौ दोषौ वातपित्ते वा वातकफौ वा पित्तकफौ वा । तत्र वातस्य योगवाहित्वाद्वातपित्ते तीक्ष्णत्वोत्कर्षः । वातकफे मन्दत्वोत्कर्षः । पित्तकफे त्वाहारविशेषात् कदाचित्तैक्ष्ण्यं कदाचिन्मान्द्यम् । प्रकृत्या विकृत्या चैवमेव ॥

**कोष्ठः क्रूरो मृदुर्मध्यो मध्यस्स्यात्तैस्समैरपि ॥**

तैश्च वातादिभिः कोष्ठश्चतुर्विधो भवति । प्रकृत्या विकृत्या च । वातोत्कर्षेण क्रूरः पित्तोत्कर्षेण मृदुः श्लेष्मोत्कर्षेण मध्यः सर्वैस्समैर्मध्य एव । क्रूरादीनाञ्च लक्षणं वक्ष्यते ॥

**शुक्रार्त्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः ।**
**तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक् ॥**

तैश्च वातादिभिः प्रकृतयो भवन्ति । प्रकृतिश्शरीरस्वरूपम् । किंभूतैर्वातादिभिः प्रकृतिस्संपद्यते अत आह शुक्रार्तवस्थैरित्यादि । तथाच वक्ष्यति 'शुक्रासृग्गर्भिणीभोज्ये'त्यादि । जन्मादौ गर्भाधानकाले पिण्डीभूतशुक्रार्त्तवस्थैः । शुक्रं रेतः आर्तवं शोणितम् । दृष्टान्तः विषेणेव विषक्रिमः ।

यथा विषक्रिमेः विषयोनेः कीटस्य अन्यमारणस्वभावेनापि विषेण प्रकृतिस्स्वरूपं संपद्यते । एवं पुरुषस्य दोषैः प्रकृतिस्संपद्यते । अनेन दृष्टान्तेनैतद्दर्शयति । वातादीनामुपघातकत्वेऽपि शुक्रार्तवस्थावस्थायां प्रकृतिनिष्पादनं प्रत्यनुपहन्तृत्वम् । तैश्च प्रकृतय इत्युक्तम् तास्तु कियत्य इत्याह तिस्र इति । पृथग्दोषैः प्रकृतयस्तिस्रो भवन्ति । मिश्रदोषाणान्तु उद्देशकथने पृथग्ग्रहणं लिंगम् । दोषाणां पृथक्त्वं मिश्रीभावश्च सप्त प्रकृतिहेतुः । तत्र च वातोत्कर्षेण हीना प्रकृतिरुच्यते । पित्तोत्कर्षेण मध्या । श्लेष्मोत्कर्षेणोत्तमा ॥

**समधातुस्समस्तासु श्रेष्ठा निन्द्या द्विदोषजाः ।**

याश्च मिश्रदोषजाः प्रकृतयः तास्सर्वा निन्द्या गर्हणीयाः । सर्वासु प्रकृतिषु मध्ये समधातुः श्रेष्ठा । या सर्वैरेव समैर्दोषैर्न्यूनेन केनचिन्नाऽप्याधिकेन । धातुशब्दो दोषपर्यायः । धारणाद्धातव इति ॥

**तत्र रूक्षो लघुश्शीतः खरस्सूक्ष्मश्चलोऽनिलः ॥**
**पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ।**
**स्निग्धश्शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः [कफः ॥**

दोषाणां वातादीनां प्रकृत्यादिकारणत्वमुक्तम् तेषां स्वरूपं न ज्ञातमतस्तद्विज्ञानार्थमाह तत्रेति । एवं हि स्वरूपे ज्ञाते वातादिहेतुकस्य रोगग्रामस्य स्वकारणदोषविशेषगुणसमन्वयेनाप्रतिपदोक्तावपि विशिष्टदोषकारणत्वं वृद्धिहानिकारणस्य च दोषाणां वस्तुजातस्य यथास्वं दोषैस्सादृश्यमसादृश्यञ्च ज्ञातं भवति । यस्माद्वक्ष्यति 'वृद्धिस्समानैस्सर्वेषा'मिति । तत्रानिलो वायू रूक्षः लघुश्शीतः । खरः अमृदुः । सूक्ष्मः सूक्ष्मस्रोतोगामित्वात्सूक्ष्मः । चलः नैकत्र स्थितिशीलः । वातस्य योगवाहित्वेऽपि तावन्मात्रं शैत्यं स्वाभाविकं न विनश्यति । पित्तमीषत्स्निग्धं तीक्ष्णं शीघ्रकारि उष्णं लघु विस्रन्दुर्गन्धि सरं व्याप्तिशीलं द्रवमकठिनम् । कफः स्निग्धः शीतः गुरुः मन्दाश्चिरकारी श्लक्ष्णः अपरुषः मृत्स्नः कचकचायमानः स्थिरः अव्यापनशीलः ॥

**संसर्गस्सन्निपातश्च तद्द्वित्रिक्षयकोपतः ।**
**तौ षोढा दशधा चोक्तावुत्कर्षादिविकल्पनात् ॥**

एषां दोषाणां मिश्रिभूतानान्तन्त्रव्यवहारार्थं संज्ञाद्वयं चिकीर्षुरिदमाह संसर्ग इति । द्वयोस्त्रयाणाञ्च संसर्गसन्निपातौ यथासंख्यं द्वौ दोषौ मिश्रीभूतौ क्षीणौ कुपितौ वा संसर्गवाच्यौ एवं त्रयो दोषास्सान्निपातवाच्याः । तौ च संसर्गसन्निपातौ यथासंख्येन षोढा दशधा चोक्तौ । षड्भिः प्रकारैष्षोढा दशभिर्दशधा । कथं उत्कर्षादिविकल्पनात् । आदिग्रहणेन मध्यहान्योः परिग्रहः । तेनैतदुक्तं भवति संसर्गउत्कर्षादिना विकल्पितष्षोढा भवति । सन्निपातश्च दशधा । तत्र संसर्गे एको दोष उत्कृष्टेन कोपेन कुपितः क्षयेण वा क्षीणः द्वितीयो मध्येन अल्पेन चेति द्वौ भेदौ । एको मध्येन द्वितीयोऽल्पेनेति तृतीयः । द्वावप्युत्कर्षेणेति चतुर्थः । द्वावपि मध्येनेति पञ्चमः । द्वावल्पेनेति षष्ठः । इतिसंसर्गः । सन्निपाते एकोत्कर्षेण द्वयोर्मध्यत्वेनाल्पत्वेन चेति द्वौ भेदौ । एको मध्येन द्वावल्पेनेति तृतीयः । द्वयोरुत्कर्षेणैकस्य मध्यत्वेनाल्पत्वेन चेति चतुर्थः पञ्चमश्च । द्वौ मध्यावेकोऽल्प इति षष्ठः । सर्वे उत्कर्षेणेति सप्तमः । सर्वे मध्येनेत्यष्टमः । सर्वे अल्पेनेति नवमः । एक उत्कर्षेण द्वितीयो मध्येन तृतीयोऽल्पेनेति दशमः । इति सन्निपाते दशधा ॥

**रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।**
**सप्त दूष्या—**

रसादयस्सप्त धातुसंज्ञाः । शरीरधारणाद्धातवः । ते च दूष्याः वातादिभिर्दोषैर्दूषणीयाः ॥

अनन्तरं मलाउच्यन्ते ॥

**—मला मूत्रशकृत्स्वेदादयोऽपि च ॥**

दोषधातुमलसमुदायात्मकत्वात् कायस्य मलाः मूत्रशकृत्स्वेदादयः । तेऽपि च दूष्याः । न केवलं धातवइत्यपिशब्दार्थः । आदिशब्दात् कर्णमलादीनां ग्रहणम् । चशब्दान्मलानाम् । धातुसंज्ञापि देहधारकत्वात् ॥

**रसादिस्थेषु दोषेषु व्याधयस्संभवन्ति ये ।**
**तज्जानित्युपचारेण तानाहुर्घृतदाहवत् ॥**

दोषा एव सर्वेषां रोगाणां कारणं विकृता न धातुमलाः या तु धातूनां मलानां रोगहेतुकत्वकल्पना सा औपचारिकी । एतदेवाह रसादीत्यादि । रसादिधातुस्थेषु दोषेषु ये व्याधयस्संभवन्ति ते रसादिजा इत्याचार्या उपचारेण ब्रुवन्ति । दृष्टान्तः घृतदाहवत् न हि घृतस्य दहनशक्तिः कदाचिदस्ति किं तर्हि तत्स्थस्याग्नेः । एवं चोच्यते घृतेनायं दग्धइति ॥

**प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ।**

**गर्भोत्पादश्च कर्माणि धातूनां क्रमशो विदुः ॥**

एषाञ्च धातूनां सप्तानां यथासंख्येन प्रीणनादीनि सप्त कर्माणि । यानि कुर्वन्तो देहं धारयन्ति । प्रीणनं रसस्य कर्म । प्रीणनं चित्तप्रीतिः । जीवनमसृजः। जविनं जीवितं प्राणनमिति यावत् । तथा च रक्तमयमष्टबिन्दुकमोजोनाम भावानां ग्रहणधारणविवेककार्यकरं वक्ष्यते। लेपो मांसस्य। लेपनं अस्थ्यादीनां लेपः । शरीरस्नेहो मेदसः। शरीरधारणमस्थ्नः।अन्यथानिरवलंबनं मांसं स्यात् । पूरणमस्थ्नो मज्ञः कर्म । गर्भोत्पादश्शुक्रस्य ॥

**शरीरन्धारयन्त्येते धात्वाहाराश्च सर्वदा।**

एते चानन्तरोक्ता धातवश्शरीरन्धारयन्ति । धात्वाहाराश्च। आहारो यथा जन्तूनां वृद्धिकारणं तथैव धातूनां धातव एव वृद्धिकारणम् । पूर्वः पूर्वो धातुरुत्तरस्योत्तरस्याऽहारः॥

**वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः ॥**

दोषादीनां वृद्धिहानिकारणत्वादप्रसंगेन सर्वभावानामपि वृद्धिहानि कारणमाह वृद्धिरित्यादि । समानैस्सदृशैस्सर्वेषां वृद्धिः। यो यो येन यावता चांशेन यस्य समानः तेनैव तावता चांशेन सदृशेन स तस्य वृद्धिकारणम् । यथा वायोरन्यो वायुर्द्रव्य स्वभावेनैव समानः । तस्यैव मरिचं लाघवरौक्ष्यगुणतः । तस्यैव सरणादिका क्रिया चलनादिसाधर्म्यात् । एवं सर्वभावानामप्यूह्यम् । एतत्समानमसमानञ्च सामान्यविशेषरूपं गोत्वादिविषयमपेक्ष्य विज्ञेयम् । न तु द्रव्यत्वसत्तादिमहाविषयं सामान्यम् । ततो व्यवहारासिद्धेः । तथाच महासामान्यापेक्षया न कस्यचिदपि वस्तुनो वस्त्वन्तरेण समानत्वव्यभिचारो न चासमानत्वसंभवः यतश्चैकस्यैव वस्तुनः केनचित्सादृश्यमन्येन वैपरीत्यमतस्सकृदेवोभयस्य वृद्धिहानिलक्षणस्य प्रवृत्तिश्च विरुध्यते। यद्यपि वस्तुनो येनैव वस्तुनोंऽशेन सादृश्यं तेनैवांशेन वैपरीत्यमपि । तथापि तयोर्वस्तुनोरुभयरूपत्वाद्वृद्धिहानिलक्षणमुभयं प्रत्येकदेव कारणत्वम् । कथमेको विरुद्धकार्यकर इति चेन्न । विरुद्धयोः कारणयोरेकस्मिन् द्रव्ये निवेशात् । न हि विरुद्धयोर्जलतेजसोरत्र द्रव्ये न संभवः पञ्चभूतात्मकत्वात्तस्य । अथैवमुच्यते यथा सुरया द्रवत्वेन समानस्य स्त्व्यस्य वृद्धिः क्रियते तथैव कथमम्लत्वादुष्णत्वाच्च विपरीतत्वे तस्यैव न क्षयइत्येतदपि न। तथाविधस्वभावत्वात् । न हि स्वभावः पर्यनुयोक्तव्यः । तथा च वक्ष्यति शास्त्रकारः "कटुपाकरसस्निग्धगुरुत्वैः कफवातजित् । लशुनो वातकफकृन्न तु वैरेचे यत् गुणै"रिति ॥ तच्च तत्रैव व्याख्यातम् । सादृश्यसामान्ययोश्चात्र न कश्चिद्विशेषः एकेन रूपेण विना सादृश्यमपि न संभवति । तथा सामान्यस्यार्थक्रियासु व्यक्त्यनुविधायित्वात्सामान्यं वृद्धिकारणमित्युक्तेऽपि न गोस्पर्शवद्व्यक्तिविशेषानपेक्षा । न हि सामान्यमनालंबनवद्वृद्धिहेतुतां याति । अपित्वाश्रययोर्मिश्रीभावविशेषेणेति ॥

**रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः।**
**षड् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ॥**

वातादीनामाध्यात्मिकानां बाह्येन द्रव्येण सादृश्यं । द्रव्यं च महाभूतकार्यं रसवीर्यविपाकप्रभावैः कार्यकरम् । ते च रसादयोऽस्मिन्नेव सूत्रस्थाने वक्ष्यन्ते । अत्र त्वध्याये तन्त्रार्थसूचनार्थं किञ्चिदुच्यते रसाइत्यादि। स्वाद्वादयष्षड्रसाः । रसनेन्द्रियग्राह्यत्वाद्रसाः द्रव्यं निर्विशेषं पञ्चभूतात्मकं मूर्तमाश्रिताः । तेषाञ्च यो यस्मात् पूर्वः स तस्माद्देहिनो बलावहः स्वभावविशेषात् ॥

**तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्।**
**कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते॥**

एषाञ्च रसानां दोषविशेषप्रशमनप्रकोपनविभागं तत्रेत्यादिना दर्शयति । अन्ये तु कुर्वते इत्येतत् घ्नन्तीत्येतच्च मारुतादिभिः प्रत्येकमभिसंबध्यते । तेषु रसेषु मध्ये आद्यास्त्रयः स्वाद्वम्ललवणा मारुतमनिलं घ्नन्ति अन्ये तु तिक्तोषणकषायाः तमेव चानिलं कुर्वते । तिक्तादयस्त्रयः तिक्तोषणकषायाः कफं घ्नन्ति अन्ये तु मधुराम्ललवणाः तमेव कफं कुर्वते । कषायतिक्तमधुराः पित्तं घ्नन्ति नाशयन्ति । अन्ये त्वम्ललवणोषणाः पित्तमेव कुर्वते । तेनैतदुक्तं भवति मधुरो वातपित्तघ्नः श्लेष्मकरः । अम्लो वातं हन्ति कफपित्ते तु जनयति । लवणो मारुतं हन्ति कफपित्ते तु कुरुते । तिक्तःकफपित्ते नाशयति वातं तु जनयति । ऊषणः कफं नाशयति वातपित्ते तु जनयति। कषायः कफपित्ते हन्ति वातं करोतीति ॥

**शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ।**

एषाञ्च रसानामाश्रयो द्रव्यं यद्रसादीननपेक्ष्य प्रभावादेव किञ्चित् करोति । तत्त्रिप्रकारं विशिष्टैरसादिभिर्युक्तं कुपितानां वातादीनां शमनं नाशकरं गुडूच्यादि । अन्यैर्युक्तं कोपनं साम्यनाशकरं यवकादि । अन्यैः स्वस्थहितं शाल्यादि । यत्र कुपितस्य समीकरणे समर्थं नापि समस्यकोपने केवलं यथास्थितमेव संवाहयति । केचित्तु एकस्यैव द्रव्यस्य योगमात्राकालादिभेदात्त्रिरूपतामाहुः ॥

**उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ॥**

तत्र द्रव्ये वीर्यं द्विविधं उष्णशीतगुणाधिक्यात् । यद्यपि सर्वं द्रव्यं पञ्चभूतात्मकं तथाप्यग्नीषोमात्मकत्वात्सर्वभावानां किञ्चिदुष्णगुणोत्कर्षात् तन्मुखेनैव कार्यकरमुष्णवीर्यमुच्यते । तद्विपरीतं शीतवीर्यम् । वीर्यं शक्तिः कार्यकरणहेतुः ॥

**त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः।**

विपाकस्तु त्रिधा । सर्वद्रव्याणां विपाको जाठराग्निसंबन्धाद्द्रव्यस्य स्वरूपान्तरप्रादुर्भावः। तत्र किञ्चित् स्वादुविपाकम् । किञ्चिदम्लविपाकम् । किञ्चित् कटुविपाकम् ॥

**गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ॥**
**गुणास्ससूक्ष्मविशदा विंशतिस्सविपर्ययाः ।**

तदेव च द्रव्यमाश्रिता विंशतिर्गुणा गुर्वादयस्सविपर्ययास्सविपरीताः । गुरुर्लघुर्मन्दस्तीक्ष्णः हिम उष्णः स्निग्धः रूक्षः श्लक्ष्णः परुषः सान्द्रः द्रवः मृदुः कठिनः स्थिरश्चलः सूक्ष्मः स्थूलः विशदः पिच्छिलः । खरादयस्त्वेतद्भेदा एव यथासंभवं व्याख्येयाः ॥

**इन्द्रियार्था व्यवायी च विकाषी चापरे गुणाः ॥**

एतेभ्य अन्ये गुणा इन्द्रियार्थाश्शब्दादयः । व्यवायी विकाषी च । इन्द्रियार्थानां प्रसिद्धत्वात् लक्षणं नोच्यते ॥

**व्यवायी देहमखिलं व्याप्य पाकाय कल्पते।**
**विकाषी विकषन् धातून् सन्धिबन्धान् विमुञ्चति**
**सरतीक्ष्णप्रकर्षौ तु कैश्चित्तौ परिकीर्त्तितौ ।**

सर्वं देहं व्याप्य यत् पाकं याति स व्यवायी । विकाषी धातून् विकषन् हिंसन् सन्धिबन्धानुपलेपादिकान्मुञ्चति नाशयति । कैश्चिदाचार्यैर्व्यवायी सरस्यैव प्रकर्ष इति परिकल्पितः । विकाषी तीक्ष्णप्रकर्षस्तथा ॥

**सत्त्वं रजस्तमश्चेति त्रयः प्रोक्ता महागुणाः ॥**

सत्वं रजस्तमश्च तन्त्रे व्यवहारार्थं महागुणशब्देनोक्ताः ।

**कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ।**

**सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥**

दोषादीनां सदृशेन वृध्या विसदृशेन च हान्या रागकारणत्वमुक्तम् । कालादीनां त्वतियोगादयो दोषवृद्धिक्षयमुखेनैव रोगकारणत्वेनोच्यन्ते कालेति । कालश्शीतोष्णवर्षलक्षणस्त्रिविधो वक्ष्यते । तस्य स्वरूपहानिर्हीनयोगः । स्वरूपातिशयोऽतियोगः । स्वरूपवैपरीत्यं मिथ्यायोगः । अर्था इन्द्रियार्थाश्शब्दादयः । तेषामिन्द्रियेणाल्पसंयोगस्संयोगाभावश्च हीनयोगः । अत्यन्तसंयोगोऽतियोगः । परुषानभिमतादिस्वरूपस्यार्थजातस्य इन्द्रियेण योगो मिथ्यायोगः । कायवाङ्मनसां क्रिया कर्म । तस्य हीना प्रवृत्तिर्हीनयोगः । अतिप्रवृत्तिरतियोगः । वेगोदीरणादिकमुत्तरत्र वक्ष्यमाणं मिथ्यायोगः । सर्वेषां समा प्रवृत्तिस्समयोगः । हीनादियोगास्त्रयो रोगकारणम् । सम्यग्योगस्त्वारोग्यकारणम् ॥

**रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।**

रोगारोग्ये के उच्येते इत्याह रोग इति । रोगो वातादीनां विषमता स्वरूपाच्चलनम् । सम्प्राप्तिवशेन मुख्योक्तिर्हेतुत्वेनौपचारिकी । विशिष्टसम्प्राप्तयो हि दोषा एव रोगास्तत्कार्यं वेति पक्षद्वयम् । तेन व्याधिविशेषमनिष्पादयदपि दोषवैषम्यं परिगृहीतं भवति। रोगविशेषाणां ज्वरादीनि नामानि । वातादीनां साम्यमरोगता ॥

**निजागन्तुविभागेन रोगाश्च द्विविधा मताः ॥**

ते च रोगा द्विविधा निजागन्तुविभागेन । मिथ्याहारविहारेण यो दोषकोपस्तत्कृता पीडा निजो रोगः । अभिघातादिना दोषकोप आगन्तूरोगः ॥

**तेषां कायमनोभेदादधिष्ठानमपि द्विधा ।**

तेषां रोगाणां कायमनोभेदेन द्विविधमधिष्ठानं स्थानम् । ज्वरातिसारादीनां कायः । रागद्वेषादीनां मनः ॥

**रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ॥**

ननु च रोगाणां वातादयः कारणत्वेनोक्ताः ते च कायिकानामेव संभवन्ति न मानसानामत आह रजस्तमश्चेति । मनश्शुद्धं सत्वम् । रजस्तमसी दोषौ तस्योपप्लवावविद्यासंभूतौ ॥

**दर्शनस्पर्शनप्रश्नैः परीक्षेत च रोगिणम् ।**

रोगी ज्ञातः रोगोपहतशरीरज्ञानोपायमाह दर्शने

ति । दर्शनेन दृष्ट्वा वर्णसंस्थानादिकम् । स्पर्शनेन सन्तापकाठिन्योत्सेधादिकम् । प्रश्नेन शूलारोचकादि । एवं रोगोपहतशरीरं दर्शनादिभिर्ज्ञातव्यम् ॥

**रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ॥**

सामान्येन शरीरस्य रोगसंबन्धे ज्ञाते रोगविशेषाधिगमोपायमाह । रोगमिति । निदानादिभिः पञ्चभिर्लक्षणै रोगं परीक्षेत । निदानं हेतुः । एवंविधमर्थजातमेवंविधस्य रोगस्य हेतुत्वेनोपदिष्टम् । एवंविधश्चोत्पन्नः । अतो निदानात् ज्ञायते रोगः । प्राग्रूपं भविष्यतो व्याधेरप्रकाशितदोषविशेषाधिष्ठानस्य लक्षणम् । लक्षणमुत्पन्नस्य चिन्हम् । उपशयस्सुखानुबन्ध्याहाराद्युपयोगः । एवंविधेनाऽऽहारादिना ह्यस्य पीडा नाभूत् एवंविधेनाभूत् अत उपशयात् ज्ञायतेऽयं रोग इति । आप्तिस्संप्राप्तिः । एवन्दुष्टेन एवंस्थानस्थितेन एवमनुगतेनानया कल्पनया एवम्मार्गेणदोषेणेति परिकल्पनम् । अत आप्तया ज्ञायतेऽयं रोग इति ॥

**भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ।**

उपशयादिप्रसंगेन च देशकालावप्युपयुज्येते अतस्तावपि सूत्रयति । इहायुर्वेदशास्त्रे आचार्या द्विप्रकारं देशमाहुः । भूमिभेदेन देहभेदेन च । देहदेशः शिरःपाण्यादिः प्रसिद्धः ॥

**जांगलं वातभूयिष्ठमानूपं तु कफोल्बणम् ॥**
**साधारणं सममलं त्रिधा भूदेशमादिशेत् ।**

भूमिदेश उच्यते जांगलमित्यादि । जांगलोनामाल्पोदकतरुपर्वतत्वेन वक्ष्यमाणलक्षणो वातभूयिष्ठस्सञ्जातौषधिखगमृगपुरुषादिर्यो वातप्रधानः । आनूपस्तस्माद्विपरीतलक्षणः । स कफप्रायौषधिसलिलः श्लीपदादिरोगदः । साधारण उभयलक्षणमध्यपतितः सममलः समवातादिदोषः । एवं त्रिविधो भूमिदेशः ॥

**क्षणादिर्व्याध्यवस्था च कालो भैषज्ययोगकृत्**

कालो द्विविधः क्षणादिर्व्याध्यवस्था च व्यवहारार्थं तन्त्रे प्रयुज्यते । तत्र क्षणादिः प्रसिद्धः । व्याध्यवस्था च पुराणनवत्वादिकं विशिष्टलक्षणसंयुक्तत्वं च व्याधेः । द्विविधोऽपि कालो रोगिणो भेषजस्य संबन्धं करोति । तथाच वक्ष्यति "पूर्वान्हे वमनं देयं मध्यान्हे तु निरूहणम्" इति । तथाच वस्तिविधौ "निवृत्तिकालः परमस्त्वयोयाम" इत्यादि । तथा ज्वरे "कषायपानपथ्यान्नै" रिति । "इतिदोषैर्विजिते" इत्यादि कुष्ठे ॥

**शोधनं शमनं चेति समासादौषधं द्विधा ।**

कालो भेषजयोगकृदित्युक्तं । भेषजमौषधम् अतस्तद्विज्ञानार्थमाह शोधनमिति । यत् द्रव्यमद्रव्यं वाऽभयातपादि कुपितदोषविनाशनार्थमुपयुज्यते तदौषधमित्युच्यते । संक्षेपेण द्विविधमौषधं शोधनं शमनं च । विस्तरतस्तु निरूहपाचनक्काथचूर्णादिकं बहुविधम् । शोधनं यत् कुपितान् दोषान् निस्सार्य बहिः रोगोपशमनं करोति । शमनं पुनर्यत् स्वस्थानास्थितानामेव साम्यहेतुः ॥

**शरीरजानां दोषाणां क्रमेण परमौषधम् ॥**
**वस्तिर्विरेको वमनं तथा तैलं घृतं मधु ।**
**धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ॥**

औषधमुक्तं तस्य विशेषतः प्राधान्यमुच्यते शरीरजानामित्यादि । शरीरजानां वातादीनां क्रमेण यथासंख्येन परमौषधं प्रधानौषधम् । किमित्याह वस्तिरित्यादि । वस्तिर्गुदप्रणिधेयः स्नेहकाथादिर्वातस्य परमौषधम् । विरेको मुखपीतं गुदमार्गेणाऽन्तः स्थितस्य दोषस्य निस्सारणं पित्तस्य परमौषधम् । वमनं मुखेन पीतं तेनैव दोषस्य निस्सारणं श्लेष्मणः परमौषधम् । इति शोधनरूपेण दोषाणामौषधम् । तथैव वातादिषु शमनस्वरूपेणैतदाह तथेति । तैलं वातस्य । घृतं पित्तस्य । मधु श्लेष्मणः । मनोदोषयो रजस्तमसो रोगविघ्नकारि धीधैर्यादिकं परमौषधम् । कालविशेषमाश्रित्य सर्वत्र सर्वमेव ॥

**तन्त्रस्यास्य परं चातो वक्ष्यतेऽध्यायसंग्रहः ।**

अस्य चाष्टांगसंग्रहाभिधानस्य तन्त्रस्य सुखस्मरणार्थमध्यायानां संग्रहो वक्ष्यते ॥

**आयुष्कामीयशिष्यार्थदिनर्तुव्याध्यसंभवाः ॥**
**द्रवान्नज्ञानसंरक्षाविरुद्धान्नान्नपानिकाः ।**
**मात्राशितौषधज्ञानश्रेष्ठशुध्यादिसंग्रहाः ॥**
**महाकषायविविधद्रव्यादिरसभेदकाः ।**
**दोषादिज्ञानतद्भेदतत्क्रिया रोगभेषजम् ॥**
**द्व्यौषधस्नेहनस्वेदशुध्यास्थापननावनम् ।**
**धूमगण्डूषदृक्सेकतृप्तियन्त्रजलौकसः ॥**
**सिराविधिश्शल्यविधिश्शस्त्रक्षाराग्निकर्मकाः ।**

चत्वारिंशादिमेऽध्यायास्सूत्रम्—

आयुष्कामीयः । शिष्यार्थदिशिष्योपनयनीयः । दिनचर्या । ऋतुचर्या । व्याध्यसंभवो रोगानुत्पादनीयः । द्रवद्रव्यविज्ञानीयः । अन्नस्वरूपविज्ञानीयः । अन्नसंरक्षणीयः । विरुद्धान्नविज्ञानीयः । अन्नपानविधिः । मात्राशितीयः । द्विविधौषधविज्ञानीयः । श्रेष्ठसंग्रहः अग्रयसंग्रहः । शोधनादिसंग्रहः । महाकषायसंग्रहः । विविधगणसंग्रहः । द्रव्यादिविज्ञानीयः । रसभेदीय; । दोषादिविज्ञानीयः । दोषभेदीयः । तत्क्रिया दोषोपक्रमणीयः । रोगभेदीयः । भेषजावचरणीयः । द्विविधोपक्रमणीयः । स्नेहविधिः । स्वेदविधिः । शुद्धिर्वमनविरेचनविधिः । वस्तिविधिः । नावनविधिः । धूमविधिः । गण्डूषादिविधिः । आश्च्योतनविधिः । तर्पणविधिः । यन्त्रविधिः । जलौकावचरणीयः । सिरावेधविधिः । शल्यापहरणविधिः । शस्त्रकर्मविधिः । क्षारकर्मविधिः । अग्निकर्मविधिः । इमे चत्वारिंशदध्यायास्सूत्रस्थानम् ॥

——शारीरमुच्यते ॥

पुत्रार्थगर्भावक्रान्तिचर्याव्यापच्छरीरजाः ।
सिरामर्मप्रकृत्याख्या विकृतांगेहितामयाः ॥

सदूता द्वादशाध्यायाः——

शारीरमुच्यते । पुत्रार्थः पुत्रकामीयः । गर्भावक्रान्तीयः । चर्या गर्भावचरणीयः । व्यापत् गर्भव्यापत् । शरीरजः अंगविभागः । सिराविभागः । मर्मविभागः । प्रकृतिभेदीयः । विकृतांगविज्ञानीयः । विकृतेहितविज्ञानीयः । विकृतामयविज्ञानीयः । दूतादिविज्ञानीयः । इति द्वादशाध्यायाश्शारीरम् ॥

—निदानं सार्वरौगिकम् ।

ज्वरास्रक्श्वासयक्ष्मादिमदाद्यर्शोतिसारिणाम्
मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ।
पाण्डुकुष्ठानिलार्त्तानां वातास्रस्य च षोडश ॥

निदानमुच्यते । सर्वरोगनिदानम् । ज्वरनिदानम् । रक्तपित्तनिदानम् । श्वासहिध्मानिदानम् । यक्ष्मादिनिदानम् । मदात्ययनिदानम् । अर्शोनिदानम् । अतिसारनिदानम् । मूत्राघातनिदानम् । प्रमेहनिदानम् । विद्रध्यादिनिदानम् । उदरनिदानम् । पाण्डुरोगनिदानम् । कुष्ठनिदानम् । वातव्याधिनिदानम् । वातशोणितनिदानम् । इति षोडशाध्याया निदानस्थानम् ॥

चिकित्साज्वरयोरस्रकासयोः श्वासयक्ष्मणोः ।
वमौ मदात्ययेऽर्शस्सु विशि द्वौ द्वौ च मूत्रिते ॥
विद्रधौ गुल्मजठरपाण्डुशोफविसर्पिषु ।
कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम् ॥
चतुर्विंशतिरध्यायाः——

चिकित्सितमुच्यते । ज्वरचिकित्सितम् । जीर्णज्वरचिकित्सितम् । रक्तपित्तचिकित्सितम् । कासचिकित्सितम् । क्षतक्षयकासचिकित्सितम् । श्वासचिकित्सितम् । यक्ष्मचिकित्सितम् । छर्द्यादिचिकित्सितम् । मदात्ययचिकित्सितम् । अर्शश्चिकित्सितम्। विशि द्वौ अतिसारचिकित्सितं ग्रहणीदोषचिकित्सितम् । मूत्राघातचिकित्सितम् । प्रमेहचिकित्सितम् । विद्रधिवृद्धिचिकित्सितम् । गुल्मचिकित्सितम् । उदरचिकित्सितम्। पाण्डुरोगचिकित्सितम् । शोफचिकित्सितम् । विसर्पचिकित्सितम् । कुष्ठचिकित्सितम् । श्वित्रचिकित्सितम् । वातव्याधिचिकित्सितम् । वातशोणितचिकित्सितम् । इति चतुर्विंशतिरध्यायाश्चिकित्सितस्थानम् ॥

——कल्पसिद्धिरतःपरम् ।

कल्पोवमेर्विरेकस्य तत्सिद्धिर्वस्तिकल्पना ॥
कल्पश्च सिद्धवस्तीनां सिद्धिर्वस्त्यनुवासयोः ।
द्रव्यकल्पोऽष्टमः——

कल्पस्थानमुच्यते । वमनकल्पः । विरेचनकल्पः । वमनविरेचनव्यापत्सिद्धिकल्पः । वस्तिकल्पः । सिद्धवस्तिकल्पः । वस्तिव्यापत्सिद्धिकल्पः । अनुवासनव्यापत्सिद्धिकल्पः । द्रव्यकल्पः । इत्यष्टावध्यायाः कल्पस्थानम् ॥

——स्थानमत उत्तरमुत्तरम् ॥

बालोपचरणे व्याधिग्रहज्ञाननिषेधने ।
स्नाने पृथग्ग्रहे भूते द्वावुन्मादे स्मृतिक्षये ॥
वर्त्मसन्धिगतौ द्वौ द्वौ दृक्तमोलिंगनाशिषु ।
सर्वदृक्स्यन्ददृक्पाके कर्णनासामुखेषु च ॥
मूर्ध्नि व्रणे तथा द्वौ द्वौ सद्योभंगे भगन्दरे ।
ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम् ॥
विषे द्वौ भुजगे कीटे द्वौ च लूतासु मूषिके ।
विषे विषोपयोगे च तथाऽध्यायोरसायने ॥

**वाजीकरणमुद्दिश्य पञ्चाशोऽष्टांगपूरणः ।**

अतउत्तरमनन्तरमुत्तरस्थानमुच्यते । बालोपचरणीयः। बालामयप्रतिषेधः । बालग्रहविज्ञानीयः । बालग्रहप्रतिषेधः। स्नानविधिः । पृथग्ग्रहे प्रत्येकग्रह प्रतिषेधः । भूते द्वौ भूतग्रहविज्ञानीयः भूतग्रहप्रतिषेधः । उन्मादप्रतिषेधः । अपस्मारप्रतिषेधः । वर्त्मसन्धिगतौ द्वौ द्वौ । वर्त्मरोगविज्ञानीयः वर्त्मरोगप्रतिषेधः सन्धिसितासितरोगविज्ञानीयः सन्धिसितासितरोगप्रतिषेधः । दृष्टिरोगविज्ञानीयः । तिमरप्रतिषेधः । लिंगनाशप्रतिषेधः । सर्वाक्षिरोगविज्ञानीयः । अभिष्यन्दप्रतिषेधः । दृष्टिपाकप्रतिषेधः । कर्णादिषुव्रणान्तेषु द्वौ द्वौ । कर्णरोगविज्ञानीयः कर्णरोगप्रतिषेधः । नासारोगविज्ञानयिः नासारोगप्रतिषेधः । मुखरोगविज्ञानीयः मुखरोगप्रतिषेधः । शिरोरोगविज्ञानीयः शिरोरोगप्रतिषेधः । व्रणविभक्तिविज्ञानीयः व्रणविभक्तिप्रतिषेधः । सद्योव्रणप्रतिषेधः । भंगप्रतिषेधः । भगन्दरप्रतिषेधः । ग्रन्थ्यादित्रितये द्वौ द्वौ । ग्रन्थ्यादिविज्ञानीयः ग्रन्थ्यादिप्रतिषेधः । क्षुद्ररोगविज्ञानीयः क्षुद्ररोगप्रतिषेधः । गुह्यरोगविज्ञानीयः गुह्यरोगप्रतिषेधः । विषप्रतिषेधः । भुजंगे द्वौ सर्पादिदंष्ट्राविज्ञानीयः सर्पादिद्रंष्ट्राप्रतिषेधः । कीटप्रतिषेधः । लूतादिविज्ञानीयः लूतादिप्रतिषेधः । प्रत्येकलूताप्रतिषेधः । मूषिकालर्कप्रतिषेधः । विषोपद्रवप्रतिषेधः । विषोपयोगीयः । रसायनाध्यायः । वाजीकरणाध्यायः ॥

**पञ्चाशदध्यायशतं षड्भिः स्थानैस्समीरितम्**

इति पञ्चाशदधिकमध्यायशतं षड्भिः स्थानैस्समीरितं सम्यगुक्तम् ॥

इतीन्दुविरचितायामष्टांगसंग्रहव्याख्यायां प्रथमोऽध्यायः

---

## द्वितीयोऽध्यायः

**अथाऽतश्शिष्योपनयनीयमध्यायं व्याख्यास्यामः। इतिह स्माहुरात्रेयादयो महर्षयः ॥**

तन्त्रार्थं सर्वं पूर्वस्मिन्नध्याये सूत्रयित्वा एवंविधश्शिष्यस्तन्त्रं शिक्षयितव्य इति प्रदर्शनार्थमध्याय आरभ्यते अथाऽत इति । अथेति सर्वाध्यायेषु मंगलार्थः । तथा अतइत्यानन्तर्ये । अधिकृत्य कृते ग्रन्थ इति च्छप्रत्ययः ॥

**गुरुभक्तोऽभियुक्तोऽतियुक्तो धीस्मृतिपाटवैः ।**
**ऋज्वास्यनासानयनस्तनुस्निग्धनखच्छविः ॥**
**ब्रह्मचारी जितद्वन्द्वो धीरस्सुचरितः स्थिरः ।**
**षण्मासानुषितश्शक्तो लज्जाशौचकुलान्वितः ॥**
**शिष्योऽध्याप्यो गतो यावदन्तं तन्त्रार्थकर्मणाम्**

गुरुभक्तत्वादियुक्तः शिष्योऽध्याप्यः शिक्षयितव्यः । आतन्त्रार्थकर्मणामन्तगमनात् । तन्त्रान्तस्तन्त्रपाठनिष्पात्तिः । अर्थान्तस्तन्त्रावबोधः । कर्मान्तो ज्ञातस्य शास्त्रस्य लक्ष्ये नियोगः । गुरोरुपाध्यायस्य भक्तः सेवातत्परः । अभियुक्तश्शास्त्रविज्ञाने यत्नपरः । तथा धीस्मृतिपाटवैरतियुक्तः अतिशयेन युक्तः धीर्ग्रहणशक्तिः स्मृतिः स्मरणं पाटवमिन्द्रियसौष्ठवम् । स्पष्टमुखः स्पष्टनासः स्पष्टनेत्रः । तनुनखः स्निग्धनखः तनुत्वक् स्निग्धत्वक् । ब्रह्मचारी निर्व्यवायः । जितद्वन्द्वो निर्दोषः । धीरो विगतभीः । साधुशीलःसच्चरितः । स्थिरः अचपलस्वभावः । षण्मासानुपाध्यायनिकटे उषितः एतावता हि साध्वसाधुस्वभावतां शिष्यस्योपाध्यायोऽधिगच्छति । शक्तः प्रियंवदः । लज्जयाऽन्वितः शौचेन च शारीरमानसया शुध्या समन्वितः सुकुलीनः ॥

**नाऽकालविद्युत्स्तनिते भूकंपे राहुदर्शने ॥**
**पञ्चदश्यामचन्द्रायां परोक्षे वा गुरोः पठेत् ।**
**नाविच्छिन्नपदं नातिमन्दं नात्युच्चनीचकैः ॥**

स च शिष्यः अकालविद्युदादिषु न पठेत् । अकालविद्युद्या वर्षाकालादन्यस्मिन् काले दृष्टा । तद्वदकालस्तनितम् । स्तनितं मेघशब्दः । भूकंपराहुदर्शने प्रसिद्धे । अचन्द्रा पञ्चदशी अमावास्या या कुहूरित्युच्यते । गुरावनवस्थिते न पठेत् । एतावता हि दुश्शिक्षितो भवति । तथा अविच्छिन्नपदं न पठेत् संहितया न पठेत् । तथाहि विसन्ध्यभ्यासो भवति । अतिमन्दमतिस्तब्धञ्च न पठेत् इतिप्रयत्नविशेषः । नात्युच्चैर्नातिर्नीचैश्च इतिस्वरविशेषः ॥

अन्यच्चेदं शिष्यः कुर्यात् ॥

**हीनान्यवेष आचार्यं पर्युपासीत राजवत् ।**
**शयीत सुप्त एवास्मिन्नुत्तिष्ठेतास्य पूर्वतः ॥**
**न ब्रूयात् केवलं नाम नाऽसाध्वपि विनाटयेत्**

राजवन्नृपवच्चाचार्यं पर्युपासीत सेवेत । किं भूतः?

हीनान्यवेषः प्रकरणात् गुरुत एव हीनवेषः गुरुवेषात् स्वल्पवेषः अन्यवेषः विसदृशवेषः । तथा अस्मिन् गुरौ सुप्त एव शयीत नासुप्ते स्वप्यात् । अस्य च गुरोः पूर्वतः पूर्वमुत्तिष्ठेत् अस्मिन् शयनादनुत्थितएवोत्तिष्ठेत् । अन्यच्च तस्य गुरोः केवलं पूजावाचकोपपदरहितं नाम न कीर्तयेत् न केवलं नाम ब्रूयात् । यावदसाध्वपि न विनाटयेत् गुरुकृतां दुरीहामुपहासपूर्वकत्वानुकुर्यादित्यर्थः ॥

अभेद्योऽनुद्धतस्तब्धः सूनृतः प्रियदर्शनः ॥
बहुश्रुतः कालवेदी ज्ञातग्रन्थोऽर्थशास्त्रवित् ।
अनाथान्रोगिणो यश्च पुत्रवत् समुपाचरेत् ॥
गुरुणा समनुज्ञातः स भिषक्छब्दमश्नुते ।

स च शिष्यः अभेद्यत्वादिगुणयोगात् भिषक्छब्दं भिषगिति नाम अश्नुते प्राप्नोति । अभेद्यः परैः प्रतिवादिधूर्त्तादिभिरधृष्यः । अनुद्धतः प्रसिद्धः । स्तब्धः चिरकारी । सूनृतः सुखोपगमनीयः । प्रियदर्शनः सुमुखः सुवेषश्च । बहुश्रुतः प्रसिद्धः । कालवेदी रोगिणोऽन्यस्य चावस्थास्वभावविशेषं जानाति । ज्ञातग्रन्थोऽभ्यस्तशास्त्रः । तथा शास्त्रार्थज्ञश्चिकित्सितज्ञश्च । यश्च शिष्यः अनाथान् स्वामिबान्धवाद्यभावात् निरुपायान् । व्याधितान् । पुत्रस्नेहेन परिपालयेत् गुरुणा योग्यत्वात् चिकित्साकरणे समनुज्ञातः । स भिषक्छब्दमश्नुते ॥

यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ।

यः पुनः केवलशास्त्रज्ञः कर्मसु चिकित्सितेषु अपरिनिष्ठितः अविज्ञातयाथातथ्यः स आतुरं प्राप्य मुह्यति । यथा भीरुः आहवं संग्रामं प्राप्य मुह्यति । न ह्यातुरस्य ग्रन्थपदार्थवाक्यार्थावबोधाद्रोगोपशमः ॥

यः पुनः कुरुते कर्म धाष्ट्र्याच्छास्त्रविवर्जितः ॥
स सत्सु गर्हामाप्नोति वधं चर्च्छति राजतः ।

यः पुनः भिषगाभासः शास्त्रार्थज्ञानेनैव रहितः धाष्ट्र्याच्चिकित्सां करोति । स सत्सु साधुषु मध्ये गर्हां प्राप्नोति राजतश्च वधं । यतः स राज्यकण्टकत्वाद्राज्ञा वध्यः आम्नातश्शास्त्रान्तरे ॥

---

* सूरत इति वा पाठः 'कृपालुस्सूरतस्सम' इत्यमरः ॥

हेतौ लिंगे प्रशमने रोगाणामपुनर्भवे ॥
ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः ।

भिषग्दोषानुक्त्वा भिषग्गुणानाह हेतावित्यादि । चतुष्प्रकारं यस्य ज्ञानं स भिषक्तमो राजार्हः । भिषजश्चिकित्साज्ञानयोगादातिशयः । हेतौ निदाने । लिंगे लक्षणे । प्रशमने रोगाणां चिकित्सिते । रोगाणामपुनर्भवे नष्टोरोगो यथा न पुनर्जायतइति ज्ञानचातुर्विध्यम् ॥

अन्यत् भिषजा किं कार्यम्? ॥

शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये ॥
पात्रापेक्षिण्यतः प्रज्ञां बाहुश्रुत्येन बृंहयेत् ।

बाहुश्रुत्येन प्रभूतशास्त्रश्रवणेन प्रज्ञां प्रज्ञानं बृंहयेत् पूरयेत् । यतोदृष्टं गुणदोषकरणे भावाः पात्रमपेक्षन्ते । तथाच शस्त्रं शौर्ययुक्ते पात्रे स्थितं कार्यकरं भवति भीरौ च दोषकरम् । एवं शास्त्रसलिले अपि परिकल्पनीये । बाहुश्रुत्योपबृंहितप्रज्ञे स्थितं शास्त्रं शोभनतां यातीत्यर्थः ॥

प्रदीपभूतं शास्त्रं हि दर्शनं विपुला मतिः ॥
ताभ्यांभिषक्सुयुक्ताभ्यांचिकित्सन्नापराध्यति

किमर्थं प्रज्ञामुपबृंहयेदित्यत आह प्रदीपभूतमित्यादि । शास्त्रप्रदीपयोस्सादृश्यं । विस्तीर्णा मतिर्दृष्ट्या समाना । यथा प्रदीपोपबृंहिता दृष्टिर्भावग्रहणे समर्था भवत्येवं शास्त्रोपबृंहिता विपुला मतिश्चिकित्सितयोग्या । एवं हि चिकित्सन्नापराधवान् भवति ॥

आहूत एव यो याति सुवेषः सुनिमित्ततः ॥
गत्वाऽऽतुरार्थादन्यत्र न निधत्ते मनः क्वचित् ।
व्याधीन् परीक्षते सम्यङ्निदानादिविशेषतः ॥
ह्रेपणीयां च तद्वार्त्तां न प्रकाशयते बहिः ।
सहसा न च तस्यापि क्रियाकालमहापयन् ॥
जानाति चोपचरितुं स वैद्यस्सिद्धिमश्नुते ।

किंभूतश्च वैद्यः सिद्धिं प्राप्नोतीत्याह आहूत इति । य आहूत एवाऽऽतुरगृहं याति । सुवेषः दूतादिविज्ञानीयोक्तकुचेलादिवेषरहितः । सुनिमित्ततो याति दुर्निमित्तं दृष्ट्वा न यातीत्यर्थः। गत्वा चाऽऽतुरार्थं वर्जयित्वाऽन्यत्र मनो न निधत्ते। आतुरार्थो निदानादिभिः पञ्चभिः विशेषैर्व्याधिपरीक्षणं तद्योग्याच चिकित्सा । ह्रेपणीयां गोप्यां लज्जावहां चातुरवार्त्तां बहिर्जनसंसदि न प्रकाशयेत् । आतुरस्यापि झटिति न प्र-

काशयेत् ईदृशीतवोपगता पीडेति । एवं ह्यातुरस्य व्याधिस्वरूपं कथयतो भिषजः कदाचित् चिकित्साहानिर्भवति । क्रियाकालं चिकित्साकालमत्यजन् उपचरितुं चिकित्सितुं च यो जानाति चिकित्सामार्गे स्पष्टविकल्पयोग्या बुद्धिरित्यर्थः । एवं भूतो वैद्योरोगोपशमलक्षणां सिद्धिं प्राप्नोति ॥

**नाददीताऽमिषं स्त्रीभ्यस्तदध्यक्षे पराङ्मुखे ॥**
**ताभिश्च रहसिस्थानं परिहासं च वर्जयेत् ।**

एतत्प्रसंगेनैव वैद्येनेदमनुष्ठेयं नेदमनुष्ठेयमित्याह नाददीतेति । परस्त्रीभ्य आमिषमर्थादिकं नाऽददीत न गृह्णीयात् । 'आमिषं भोग्यवस्तुनी'ति कोशः। तदध्यक्षे आमिषदातृयोषिद्रक्षाधिकृते पराङ्मुखे परोक्षे ताभिः स्त्रीभिश्च रहस्येकान्ते स्थितिं परिहासं च वर्जयेत् ॥

**आर्त्तं च नृपसद्वैद्यैर्द्विष्टं तद्वेषिणं द्विषम् ॥**
**चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् ।**
**हीनोपकरणं व्यग्रमविधेयं गतायुषम् ॥**

आर्त्तं रोगिणं च एवं भूतं भिषग्वर्जयेत् । किंभूतम् ? नृपेण राज्ञा द्विष्टं सद्वैद्यैश्च । अथवा नृपेण सद्भिश्च वैद्यैश्च । तद्वेषिणं तान्नृपसद्वैद्यान् यो द्वेष्टि तम् । द्विषं शत्रुं च न चिकित्सेत् । चण्डं दर्पिणम् । शोकातुरादयः प्रसिद्धाः । वैद्यमानिनं अवैद्योऽपि योवैद्यमात्मानं मन्यते स्वमतेनौषधं करोतीत्यर्थः । हीनोपकरणं हीनचिकित्सांगम् । व्यग्रं कार्यबहुलम् । अविधेयं भिषजः। गतायुषं रिष्टज्ञानेन ॥

**जिजीविषुर्व्याधितोऽपि पूर्वोक्तगुणवर्जितान् ।**
**क्रियाविक्रयिणोवैद्यान् मृत्योरग्रेसरा हि ते ॥**

न केवलं भिषगेवंभूतमातुरं वर्जयेत् यावदातुरोऽपि जीवितुमिच्छुः पूर्वोक्तवैद्यगुणवर्जितान् वैद्यांस्त्यजेत् । क्रियाविक्रयिणः पण्याचिकित्सकान् । ते हि मृत्योरग्रेसराः पुरस्सराः पुरुषाः पदातयः ॥

**भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।**
**चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम् ॥**

चिकित्सायाः प्रकृतत्वादिदमुच्यते* भिषगित्यादि । चिकित्सितस्य रोगोपशमलक्षणस्य पादचतुष्टयमंगचतुष्टयमुक्तम् । प्रत्येकं तच्चतुर्गुणम् । उपस्थाता परिचारकः ॥

* प्रयोजकत्वादिति वा पाठः ॥

**दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक् ।**

भिषग्वैद्यश्चतुर्गुणः । दक्षश्चतुरः । तीर्थात्तशास्त्रार्थः उपाध्यायात् प्राप्तशास्त्रस्वरूपः । दृष्टकर्मा बहुशश्चिकित्सितरोगः । शुचिश्शरीरेण मनसा च ॥

**बहुकल्पं बहुगुणं संपन्नं योग्यमौषधम् ॥**

औषधमपि चतुर्विधम् । बहुकल्पं बहवः कल्पाः स्वरसक्वाथचूर्णादिकाः कल्पना यस्य न तु लवणवदेककल्पम् । बहवोगुणास्सरत्वादयो यस्य तत् बहुगुणम् । संपन्नं पाकसंस्कारादियुक्तम् । योग्यं रोगस्य रोगिणश्च देशकालाद्यवस्थापेक्षया ॥

**अनुरक्तश्शुचिर्दक्षो बुद्धिमान् परिचारकः ।**

उपस्थाताऽपि चतुर्विधः । आतुरस्यानुरक्तः । शुचिदक्षौ व्याख्यातौ । बुद्धिमान् प्रसिद्धः ॥

**आढ्योरोगी भिषग्वश्योज्ञापकः सत्ववानपि ॥**

रोग्यपि चतुर्विधः । आढ्यो धनवान् । वैद्यवश्यः । ज्ञापकः वैद्यं रोगाहारविहारादीनामन्वयव्यतिरेकं बोधयितुं समर्थः । सत्ववानभीरुः ॥

**यद्वैद्ये विगुणे पादा गुणवन्तोऽप्यनर्थकाः ।**
**स पादहीनानप्यार्तान् गुणवान् यच्च यापयेत्**
**चिकित्सायास्तमेवातः प्रधानं कारणं विदुः ।**

चिकित्सायाश्च यद्यपि कारणचतुष्टयमुक्तं तथापि वैद्यएव प्रधानं कारणं कुतः? आह यद्वैद्यइति । यद्यस्माद्वैद्ये विगुणे यथोक्तगुणरहिते शेषास्त्रयः पादा गुणवन्तो यथोक्तगुणा अप्यनर्थकाः । अयमपरो हेतुः यच्च यस्माच्च वैद्यो गुणवान् पादहीनानप्यार्तान् यापयेत् मरणाद्रक्षति । अतोऽपि तमेव प्रधानं कारणं विदुर्विद्वांसः ॥

**साध्योऽसाध्य इति व्याधिर्द्विधा तौ तु पुनर्द्विधा**
**सुसाध्यः कृच्छ्रसाध्यश्च याप्यो यश्चानुपक्रमः**

चिकित्सा प्रकृता । सा च व्याधेर्नाशनं अत उच्यते। द्विविधो व्याधिः साध्योऽसाध्यश्च । साध्यो द्विविधः सुखसाध्यः कृच्छ्रसाध्यश्च । असाध्योऽपि द्विविधः याप्यः अनुपक्रमश्चेति ॥

**सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः ॥**
**अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः ।**
**अतुल्यदूष्यदेशर्तुप्रकृतिः पादसंपदि ॥**

**ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः ।**
**सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते ॥**

सुखसाध्यादिकस्य व्याधिचतुष्टयस्य लक्षणमुच्यते । सर्वौषधक्षमे देहे उत्पन्नो व्याधिः सुखः सुखसाध्यः । यूनस्तरुणस्य । पुंसः पुरुषस्य । जितात्मनो जितेन्द्रियस्य गेयशब्दादीनामलोलुपस्य देह उत्पन्नः । अन्यच्च किंभूतः अमर्मगः हृत्कण्ठादिपीडाकरणे असमर्थः। स्वल्पनिदानः स्वल्पपूर्वरूपः स्वल्पलक्षणश्च सुसाधः । तथोपद्रवरहितः उत्पन्ने व्याध्यामुल्पन्नं दुःखानुबन्धि व्याध्यन्तरमुपद्रवशब्देनोच्यते । तथा अतुल्यदूष्यः यस्मिन् व्याधौ विसदृशेन दोषेण दूषितो दूष्यः यथा श्लेष्मणा शीतेन रक्तमुष्णं दूषितम् । तथा अतुल्यदेशो व्याधिः यथा आनूपदेशे पित्तसंभूतः । अतुल्यर्तुर्यथा शरदि कफोद्भवः । अतुल्यप्रकृतिर्यथा पित्तप्रकृतेः श्लेष्मसंभवः । पादसंपदि अंगचतुष्टयपरिपूर्णत्वे सति व्याधिः सुखसाध्यः । तथा ग्रहेषु अनुगुणेषु अनुकूलराशिस्थितेषु। तथा एकेन वातादीनामन्यतमेन दोषेण यो जातः तथा एकमार्गः अन्तर्मार्ग एव वा बहिर्मार्ग एव वा । एतच्च परस्ताद्वक्ष्यामः । तथा नवः । इति सुखसाध्यस्य लक्षणमुक्तम् । तस्यैव सुखसाध्यस्य अन्वर्थताऽप्युच्यते । सुखसाध्यो यः सुखोपायः स्वल्पोपाय इति अल्पेन च कालेन सिध्यति ॥

**कृच्छ्रैरुपायैः कृच्छ्रस्तु महद्भिश्च चिरेण च ।**
**असाध्यलिंगसंकीर्णस्तथा शस्त्रादिसाधनः ॥**

कृच्छ्रसाध्यस्तु कृच्छ्रैस्सुदुष्करैरुपायैर्महद्भिः प्रभूतैश्चिरेण च सिध्यति । असाध्यलिंगानि यथास्वं वक्ष्यमाणानि तैस्संकीर्णो मिश्रितः । तथा शस्त्रादिकं साधनमुपायो यस्य । आदिग्रहणेनाग्निक्षारादीनां ग्रहणमिति कृच्छ्रसाध्यलक्षणानि ॥

**शेषत्वादायुषः पथ्यैर्याप्यः प्रायो विपर्यये ।**
**दत्वाऽल्पं सुखमल्पेन हेतुना स प्रतन्यते ॥**
**याति नाशेषतां रोगः कर्मजो नियतायुषः ।**
**प्रपतन्निव विष्कंभैर्धार्यतेऽत्रातुरो हितैः ॥**

याप्यउच्यते शेषत्वादित्यादि । बाहुल्येन विपर्यये साध्यलक्षणविपरीतत्वे सत्यायुषो जीवितस्य शेषत्वादक्षीणत्वान्मारयितुमसमर्थः पथ्यैराहारविहारैर्याप्यः । स च व्याधिः चिकित्सितेनाल्पं सुखं दत्वा पुनस्सोल्पेनैव हेतुना प्रतन्यते विस्तीर्यते । यतश्च दुष्कृतकर्मजो रोगो नियतायुष उत्पन्नो न च नश्यति नापि मारयति । अत्र च याप्ये व्याधौ आतुरो हितैराहारविहारादिकैर्धार्यते यथा प्रपतन् पिपतिषुः कुड्यादिर्विष्कंभैस्स्तंभैर्धार्यते । इति याप्यलक्षणानि ॥

**परोऽसाध्यः क्रियास्सर्वाः प्रत्याख्येयोऽतिवर्तते ।**
**तस्मादुपेक्ष्य एवासौ स्थितोऽत्यन्तविपर्यये ॥**
**भ्रममोहारतिकरो दृष्टरिष्टोऽक्षनाशनः ।**

अनुपक्रमलक्षणान्युच्यन्ते । परश्चैषां शेष असाध्यः प्रत्याख्येयस्सन् सर्वाः क्रियाः चिकित्साः अतिवर्तते कुण्ठयति । तस्मात् सुखसाध्यलक्षणेभ्योऽत्यन्तविपरीतत्वे स्थित उपेक्षणीय एव । तथा भ्रमादिकरः भ्रमइव भ्रमः चित्तस्य बहुस्वरूपमवस्थानम् । मोहो वैचैतन्यम् । अरतिः कुत्रचिदनवस्थितिः। तथा अक्षनाशनो दर्शनादीन्द्रियनाशनः । इत्यनुपक्रमलक्षणानि॥

**व्याधीन् पुरा परीक्ष्यैवमारभेत ततः क्रियाम् ॥**
**स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात् ।**

इत्येवमनन्तरोक्तप्रकारेण व्याधीन् पुरा आतुरसंयोग एव समीक्ष्य ततः क्रियां चिकित्सामारभेत । अन्यथैतदकुर्वन् ध्रुवमवश्यं स्वार्थादिहानिमवाप्नुयात् अश्नुवीत ॥

**साध्ययोरपि संयोगो बलिनोर्यात्यसाध्यताम्**
**विद्यादसाध्यमेवातः साध्यासाध्यसमागमम् ।**
**नासाध्यस्साध्यतां याति साध्यो यातित्वसा**
**[ध्यताम् ॥**

वैद्यस्य परीक्षणीयप्रसंग इदमप्याह साध्ययोरित्यादि । बलिनोर्बलयुक्तयोः साध्यलक्षणयुक्तयोः संयोगोऽप्यसाध्यतां याति । अत एव संयोगाद्धेतोरसाध्यासाध्यसमागममप्यसाध्यं विद्यात् । तथा योऽसाध्यो व्याधिः स न कदाचिदपि साध्यतामिति । साध्यः पुनरसाध्यतामेति ॥

**पादापचाराद्दैवाद्वा यान्त्यवस्थान्तरं गदाः ।**

कथमित्याह पादापचारादित्यादि । पादापचारो यथोक्तानामंगानामपरिपूर्णत्वम् । अथवा सर्व एव व्याधयः पादनिरपेक्षा एव दैवाद्धेतोरवस्थान्तरं स्वरूपाद्विलक्षणतां यान्ति दैवमन्यजन्मकृतं कर्म ॥

**वरमाशीविषविषं दीप्तमग्निमयोऽपि वा ॥**
**उपयुञ्जीत न त्वार्त्तादामिषं कृपणाज्जनात् ।**

वैद्यस्यानुष्ठेयप्रसंग इदमप्याह वरमित्यादि । वरमा-

शीविषाणां दंष्ट्रिणां विषमुपयुक्तम् । दीप्तोवाऽभिरुपयुक्तः । दीप्तमयोऽपि वा उपयुक्तं शरीरेण संयोगं नीतम् । न तु कृपणार्जनादामिषमर्थादिकमुपयुक्तम् । अथवा आशीविषाश्च वरम् । विषञ्च वरम् ॥

**वरो भूतदया धर्म इत्यार्त्तेषु भिषग्वरः ॥**
**वर्त्तते यस्तु सिद्धार्थः स सर्वमतिवर्त्तते ॥**

इति यो भिषग्वैद्यः भूतदया वरः श्रेष्ठो धर्म इति विदित्वाऽऽर्त्तेषु रोगिषु वर्त्तते । स सिद्धार्थः अर्थसिध्या युक्तः । सर्वं सदाचारं जनमतिवर्त्तते तेषामुपरि भवतीत्यर्थः ।

इतीन्दुविरचितायामष्टांगसंग्रहव्याख्यायां

द्वितीयोऽध्यायः.

## तृतीयोऽध्यायः

**अथातोदिनचर्यां नामाध्यायं व्याख्यास्यामः ।**
**इतिह स्माऽहुरात्रेयादयो महर्षयः ॥**

अस्मिंस्तन्त्रे आयुषः पालनं प्रकृतं तच्च द्विविधं स्वस्थवृत्तमातुरवृत्तं च । मंगल्यत्वात् स्वल्पवक्तव्यत्वादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवादावुच्यते अथातोदिनचर्यामित्यादि । प्रतिदिनं कर्त्तव्या चर्या दिनचर्या ॥

**ब्राह्मे मुहूर्त्त उत्तिष्ठेज्जीर्णाजीर्णं निरूपयन् ।**
**रक्षार्थमायुषः स्वस्थो——**

किं तदित्याह ब्राह्म इति । स्वस्थो नीरोगः । आयुषो यथोपचितस्य रक्षार्थं ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् मुहूर्त्तो नाडिकाद्वयं । ब्रह्मणोऽयं ब्राह्मः । ब्रह्मज्ञानं तदर्थमध्ययनाद्यपि ब्रह्म तस्य योग्यो मुहूर्त्तो ब्राह्मः ब्रह्मयोग्यश्च कालो योगशास्त्रेषु निशायाः पश्चिमो यामो निश्चितः । तेन निशाक्षये निद्रानाशप्रयुक्तत्वादुत्थानस्याप्राप्तसन्ध्यासंसर्गो मुहूर्त्तोऽभिमतः । सन्ध्यायां स्वप्नप्रतिषेधात्। यद्यपि च ज्योतिश्शास्त्रेषु सूर्योदयात् प्रभृति षड्विंशो मुहूर्त्तो नाडिकाष्टकव्यवहितद्वितीयसूर्योदयो ब्राह्म इत्युच्यते तथापि नासाविहाभिप्रेतः । अन्नस्य जरणकाले जागरणप्रसंगात् । तस्मात्सन्ध्यायाः पूर्वो मुहूर्त्तो ब्रह्मोपासनयोग्यत्वात् ब्राह्मः। अभ्यासाद्यपेक्षन्तत्पूर्वोपि वा। तस्मिन् शय्यात उत्तिष्ठेत् । केचित्तु ज्योतिश्शास्त्रविदः विरिञ्चप्रभवं मुहूर्त्तं निशान्तभवमाहुः । किं कुर्वन्नुत्तिष्ठेत् जीर्णाजीर्णं निरूपयन्। ह्यस्तनमाहारं मया भुक्तं जीर्णं न वेति विकल्पयन् । एतावता हि कदाचित्स्वप्यादजीर्णाति नोत्तिष्ठेत् । अथवा षड्विंश एव ब्राह्मो मुहूर्त्तः अत्रगृह्यते । जीर्णाजीर्णं निरूपयन्नित्येतच्च दोषपरिहाराय भविष्यति ॥

**——जातवेगः समुत्सृजेत् ॥**
**उदङ्मुखो मूत्रशकृद्दक्षिणाभिमुखो निशि ।**
**वाचं नियम्य प्रयतः संवीतांगोऽवगुण्ठितः ॥**
**प्रवर्त्तयेत् प्रचलितं न तु यत्नादुदीरयेत् ।**
**नामेध्यमार्गमृत्भस्मगोस्थानाकीर्णगोमये ॥**
**पुरान्तिकाग्निवल्मीकरम्योत्कृष्टचितिद्रुमे ।**
**न नारीपूज्यगोर्केन्दुवाय्वम्बाग्निजलं प्रति ॥**
**न चातिरस्कृत्य महीं भयाशक्त्योस्तु कामतः ।**

उत्थितश्च किं कुर्यादित्याह जातवेग इत्यादि । मूत्रपुरीषमुदङ्मुखः उत्तरां दिशं प्रेक्षमाणः उत्सृजेत् त्यजेत् । किंभूतः प्राप्तवेगः नोदीरितवेग इति । एतावता हि वातादीनां कोपोभवति । निशि रात्रौ दक्षिणदिगभिमुखः मूत्रशकृदुत्सृजेत् । किं कृत्वा मूत्रपुरीषमुत्सृजेत् वाचं नियम्य कृतमौनः । प्रयतः अनन्यकार्यः । संवीतांगो गृहीतपरिधानः । अवगुण्ठितः । अनभ्रशिराः । स्थानात् प्रचलितं मूत्रशकृत् स्तोकं स्तोकं प्रवर्त्तयेत् प्रेरयेत् । न त्वतियत्नेनाचलितमेवोदीरयेत् । नामेध्ये अत्यन्ताशुचौस्थाने । मार्गो रथ्या । तत्रापि नोत्सृजेत् । न मृदि राशीभूतायामपि । न भस्मनि । न गोस्थाने। न आकीर्णे जनसंसदि। न गोमयस्योपरि। न पुरनिकटे। नाग्निनिकटे। न वल्मीकोपरि । मृदा पिपीलिकादिकृतं स्थाण्वाकारं वल्मीकशब्देनोच्यते । नातिरमणीये, भूमिभागे, न हललिखिते, न कृताध्वराग्निचये, न वृक्षस्याधः उपरि वा । न च नार्याद्यभिमुखं । पूज्योगुर्वादिः । गवादयः प्रसिद्धाः । न च महीं भूमिमतिरस्कृत्य तृणादिभिरनवच्छाद्य । उत्सृजेदिति सर्वत्रानुवर्त्तते । यदा तु स्वामिचोरादिभयं यदा वा शरीराशक्तता तदा कामतो यथेच्छम् ॥

**नवेगितोऽन्यकार्यःस्यान्नाजित्वासाध्यमामयम्**

तथा वेगितः प्राप्तमूत्रादिवेगो नान्यकार्यो भवेत् । अ-

न्यकार्यप्रतिषेधप्रसंगेनाह साध्यमपि रोगमजित्वा नान्यकार्यो-भवेदिति ॥

**निश्शल्यादुष्टमृत्पिण्डीपरिमृष्टमलायनः ।**
**अभ्युद्धृताभिः शुचिभिरद्भिर्मृद्भिश्च योजयेत् ॥**
**लेपगन्धावहं शौचमनुत्पतितविन्दुभिः ।**

उत्सृष्टवेगश्च शौचं योजयेत् कुर्यात् । किंभूतः कुर्यादत आह । निश्शल्यया काष्ठादिशल्यराहित्यां । अदुष्टया सौम्यया । मृत्पिण्डया परिमृष्टमलायनः सम्मार्जितगुदः । केन शौचं योजयेदत आह । अभ्युद्धृताभिरद्भिः नदीतटाकादितः कलशपाण्यादिना उत्गृहीताभिः । न तु कटीमेव नद्यामवगाह्य शौचयेत् । न चाशुचिना करेण मृत्सहिताभिरद्भिः। किंभूतं शौचमित्याह लेपगन्धावहमिति । लेपगन्धावहं मलायने लेपगन्धौ लेपश्च गन्धश्च येन नश्यति । एतेन मृदोऽपां शौचस्य च मानमुक्तं भवति । अनुत्पतितविन्दुभिरद्भिः यत उत्पातिता विन्दवोऽस्पृश्याः ॥

**स्पृष्ट्वा धातून् मलानश्रु वसाकेशनखांश्च्युतान्॥**
**स्नात्वाभोक्तुमनाभुक्त्वासुप्त्वाक्षुत्वासुरार्चने ।**
**रथ्यामाक्रम्य चाचामेदुपविष्ट उदङ्मुखः ॥**
**प्राङ्मुखोवाविविक्तस्थोनवहिर्जानु नान्यदृक् ।**
**अजल्पन्नुत्तरासंगी स्वच्छैरंगुष्ठमूलगैः ॥**
**नोद्धृतैर्नानतो नोर्ध्वं नाग्निपक्वैर्न पूतिभिः ।**
**न फेनबुल्बुदक्षारैर्नैकहस्तार्पितैर्जलैः ॥**
**नार्द्रैकपाणिर्नामेध्यहस्तपादो न शब्दवत् ।**

अन्यच्चेदं कुर्यात् । आचामेत् जलेन उपस्पृशेत् । किं कृत्वाऽह धात्वादिकान् स्पृष्ट्वा । किंभूतान् शरीराच्चलितान् धातवो रक्तादयः । मला मूत्रशकृत्कर्णमलादयः । अश्रु दृशोर्जलम्। अप्सदृशो मेदसो भागो वसा । तथाच "शुद्धमांसस्य यस्नेहः सा वसा परिकीर्त्तिता" इति चरकः । स्नात्वा चाऽचामेत् । भोक्तुमना बुभुक्षुः । भुक्त्वा च, सुप्त्वा च, क्षुत्वा च क्षवथुं कृत्वा, सुरार्चने देवार्चनारंभे, रथ्यामाक्रम्य मार्गं परिभ्रम्य, चकारात् प्रकृतं शौचं कृत्वा । किंभूतः पूर्वामुत्तरां वा दिशमीक्षमाणः उपविष्टः । न बहिर्जानु जानुभ्यां बहिः पाणी अकृत्वा । नान्यदृक् आचमनजलादन्यत्र न दृष्टिं कुर्वन् । अजल्पन् कृतमौनः । उत्तरासांगी गृहीतोपरिवसनः । कैराचामेत्? जलैः । किं भूतैः? स्वच्छैः निर्मलैः अंगुष्ठमूलगैः ब्राह्मतीर्थोपवेशिभिः । नोद्धृतैराचामेत् किं तर्हि अविच्छिन्नधारया दत्तैः। नाऽनतः न नामितांगः । नोर्ध्वं उत्थितो न । नाग्निपक्वैः, न दुर्गन्धिभिः न फेनिलैः, न बुल्बुदिभिः, न क्षारैः, न विरसैः, नाप्येकहस्तदत्तैः । आर्द्रैकपाणिर्नाचामेत् यावत्द्वावपि पाणी न प्रक्षाळितौ । नाशुचिहस्तपादः । जलपाने शब्दं न कुर्वन् ॥

**वटासनार्कखादिरकरञ्जकरवीरजं ॥**
**सर्जारिमेदापामार्गमालतीककुभोद्भवम् ।**
**कषायतिक्तकटुकं मूलमन्यदपीदृशम् ॥**
**विज्ञातवृक्षं क्षुण्णाग्रमृज्वग्रन्थि सुभूमिजं ।**
**कनीन्यग्रसमस्थौल्यं सुकूर्चं द्वादशांगुलम् ॥**
**प्रातर्भुक्त्वाच यतवाग्भक्षयेद्दन्तधावनं ।**
**वाप्यत्रिवर्गत्रितयक्षौद्राक्तेन च घर्षयेत् ॥**
**शनैस्तेन ततो दन्तान् दन्तमांसान्यबाधयन् ।**

अन्यच्च किं कुर्यात्? कृतशौचः दन्तधावनकाष्ठं भक्षयेत् । किं तत् वटादिवृक्षाणामन्यतमस्य मूलं यत् कषायादिरससंयुक्तं न त्वन्यरसं वटादिजं मूलं वटादिमूलादन्यदपीदृशं कषायादिरससंयुक्तं मूलं वा काष्ठं वा सर्वं भक्षयेत् । विज्ञातवृक्षं वृक्षा हि मोहनादिनानाशक्तयोदृश्यन्ते क्षुण्णाग्रमापोथिताग्रं, ऋजु स्पष्टं, तथा ग्रन्थिरहितं, सुभूमिजं श्मशानाद्यजातं, स्थूलतया च कनीनिकाग्रान्तसमं कनीनिका कनिष्ठांगुलिः सुकूर्चं अपरुषकूर्चं, परिमाणेन द्वादशांगुलं । द्वौ कालौ दन्तमांसं रक्षन् दन्तपवनं भक्षयेत्। दिनारंभे भोजनान्ते च। यतवाङ्मौनी । ततोदन्तपवनं मलापनुत्यर्थं भक्षयित्वा अनन्तरं शनैः वाप्यादि क्षौद्रान्तान्वितप्रान्तेन दन्तकाष्ठेन दन्तान् घर्षयेत् । वाप्यं कुष्ठं । त्रिवर्गत्रितयं त्रिकटुत्रिफलात्रिजातकं च ॥

**लिखेदनुसुखं जिह्वां जिह्वानिर्लेखनेन च॥**
**तथास्यमलवैरस्यगन्धा जिह्वास्यदन्तजाः ।**
**रुचिवैशद्यलघुता न भवन्ति भवन्ति च ॥**

अनु पश्चात् तेनैव लेखनयोग्यकृतेन दन्तपवनेन जिह्वां सुखं लिखेत्, जिह्वानिर्लेखनेन लोहादिकृतेन वा जिह्वां सुखं लिखेत् । स्वल्पमपि मांसमबाधमानस्तां लिखेत्। एवं

हि दन्तपवनाजिह्वानिर्लेखनाभ्यामस्य पुंसो मलादयोजिह्वादिजा न भवन्ति। यथासंख्यं विवक्षिता रुच्यादयोलघुतान्ताश्च भवन्ति ॥

**नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ।**
**तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥**

तत्र दन्तपवनं अजीर्णादियुतः पुरुषो नाद्यात्। वमथुः च्छर्दिः, श्वासादयो वक्ष्यमाणलक्षणाः। आमयशब्देन रोगपर्यायेण हृदादीनां संबन्धः ॥

**नैव श्लेष्मातकारिष्टबिभीतधवधन्वजान् ।**
**बिल्ववञ्जुळनिर्गुण्डीशिग्रुतिल्वकतिन्दुकान् ॥**
**कोविदारशमीपीलुपिप्पलेंगुदगुल्गुलून् ।**
**पारिभद्रकमम्लीकामोचक्यौ शाल्मलीं शणम्॥**
**स्वाद्वम्ललवणं शुष्कं सुषिरं पूति पिच्छिलम् ।**

श्लेष्मातकादिकं दन्तपवनमवश्यमेव नाद्यात्। तथा प्रथमरसत्रययुक्तं, दुर्गन्धिपिच्छिलं च, शुष्कं नीरसं, सुषिरमन्तश्शून्यम्। श्लेष्मातकादीनां शणान्तानां पर्यायाणि नोच्यन्ते विशिष्टदेशप्रसिद्धत्वात्। या चावाकांक्षा सा निघण्टुज्ञानादेव नश्यति ॥

**पालाशमासनं दन्तधावनं पादुके त्यजेत् ॥**

दन्तपवनप्रसंगेनाह। पलाशवृक्षजातमासनं, दन्तधावनं, पादुके च त्यजेत् ॥

**दन्तान् पूर्वमधोघर्षेत् प्रातस्सिञ्चेच्चलोचने ।**
**तोयपूर्णमुखो ग्रीष्मशरदोः शीतवारिणा ॥**

दन्तपवने चाधोदन्तान् पूर्वं घर्षेत्। प्रतिदिनं प्रातर्दिनारंभे अक्षिणी सिञ्चेत् तोयपूर्णमुखः सन्। केन सिञ्चेत् शीतवारिणा। किं नित्यमेव? शीतवारिणा ग्रीष्मशरदोरेव। अन्यस्मिन्नृतौ कोष्णवारिणेत्यर्थात् लभ्यते ॥

**प्रणम्य देवान् वृद्धांश्च मंगलाष्टशतं शुभम् ।**
**शृण्वन् काञ्चनविन्यस्तं सर्पिः पश्येदनन्तरम्**

इदञ्चानन्तरं कुर्यात्। देवान् वृद्धांश्च प्रणम्य मंगलाष्टशतं शुभं शृण्वन् सौवर्णभाण्डस्थं घृतमवाङ्मुखः पश्येत्। मंगलाष्टशतं दूतादिविज्ञानीये वक्ष्यते ॥

**सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् ।**
**लोचने तेन भवतो मनोज्ञे सूक्ष्मदर्शने ॥**
**व्यक्तत्रिवर्णे विमले सुस्निग्धघनपक्ष्मणी ।**

ततस्सौवीरमञ्जनमक्षिभ्यां हितं नित्यं भजेत्। तेन चाञ्जनेन लोचने नेत्रे, मनोज्ञे दर्शनीये, भवतः। सूक्ष्मञ्च रूपं पश्यतः। व्यक्तत्रिवर्णत्वाच्च निर्मले, रक्तशुक्लकृष्णं वर्णत्रयम्। सुस्निग्धानि सुघनानि च पक्ष्माणि ययोस्ते तथाविधे ॥

**चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मतो भयम् ।**
**योजयेत्सप्तरात्रेऽस्मात् स्रावणार्थं रसाञ्जनम् ॥**

तथा सप्तरात्रान्तरेण चक्षुषः श्लेष्मस्रावणार्थं रसाञ्जनं योजयेत्। कुतः यतश्चक्षुस्तेजोमयं, चक्षुषस्तेजोमयव्यपदेशो भूयसा। यतः पञ्चभूतात्मकमिन्द्रियन्तस्य च वातादितोविशेषाच्छ्लेष्मणो विपरीतत्वात् भयमिति ॥

**अणुतैलं ततोनस्यं ततोगण्डूषधारणम् ।**
**घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः ॥**
**सुगन्धिवदनाः स्निग्धनिस्वना विमलेन्द्रियाः ।**
**निर्वलीपलितव्यंगा भवेयुर्नस्यशीलिनः ॥**
**ओष्ठस्फुटनपारुष्यमुखशोषद्विजामयाः ।**
**न स्युः स्वरोपघाताश्च स्नेहगण्डूषधारणात् ॥**
**खदिरक्षीरिवृक्षारिमेदांबुकवळग्रहः ।**
**अरोचकास्यवैरस्यमलपूतिप्रसेकजित् ॥**
**सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ।**

अनन्तरं वक्ष्यमाणमणुतैलं नस्यं योज्यं अनन्तरं गण्डूषधारणं। नस्यशीलिन एवं भवन्ति। घनोन्नतप्रसन्नास्त्वगादयः येषां ते तथाविधाः। घनत्वादिभिस्त्वगादीनां यथासंभवं संबन्धः। प्रसन्नत्वचः, उन्नतस्कन्धाः, घनग्रीवाः, प्रसन्नमुखाः, घनवक्षसः, सुगन्धास्याः, मधुरस्वराः, वलीपलितव्यंगरहिताश्च। वल्यस्त्वचः संकोचाः, व्यंगानि मुखे श्यावानि मण्डलानि। स्नेहगण्डूषधारणादोष्ठस्फुटनादयो न भवन्ति। पारुष्यमोष्ठयोरेव, तथा आस्यशोषः, दन्तरोगः, स्वरहानिश्च। तथा अरोचकादिनाशकामेन खदिराद्यंबुकवळग्रहः कार्यः। तथा वक्त्रलाघवकामेन उष्णोदकगण्डूषः। कवळगण्डूषयोर्भेदोगण्डूषादिविधौ वक्ष्यते। प्रसेक आस्यस्रावः ॥

**प्रायोगिकं ततोधूमं गन्धमाल्यादि चाचरेत् ॥**
**धूमादस्योर्ध्वजत्रूत्था न स्युर्वातकफामयाः ।**

अनन्तरं वक्ष्यमाणलक्षणं प्रायोगिकं धूमं गन्धमाल्या-

दि चाचरेत् । आदिशब्देन वासःप्रभृतीनां ग्रहणम् । धूमपस्य किं भवति । जत्रोरक्षकमन्याभिधानस्य, ऊर्ध्वमुपरिशिरसि वातकफरुजा रोगा न भवन्ति ॥

अञ्जनोत्क्लेशितं नस्यैः कवलैर्नावनेरितम् ॥
धूमेन कवलोत्क्लिष्टं क्रमाद्वातकफं जयेत् ।
गन्धमाल्यादिकं वृष्यमलक्ष्मीघ्नं प्रसाधनम् ॥

नन्वञ्जनादीनामेवंभूतः क्रमः किमर्थमाश्रितइत्याह अञ्जनोत्क्लेशितमित्यादि । गन्धमाल्यादिकमुपयुज्यमानं वृष्यमलक्ष्मीघ्नं कान्तिकारं च भवति ॥

वासो न धारयेज्जीर्णं मलिनं रक्तमुद्भणम् ।
माल्यं न लंबं न बहिर्न रक्तं जलजादृते ॥
नैव चान्येन विधृतं वस्त्रं पुष्पमुपानहौ ।

अन्यच्चेदमिदं कुर्यात् । जीर्णं जीर्णप्रायं वासः परिधानं न धारयेत् मलिनं रक्तमुद्भणञ्च । उद्भदमुद्भटं, माल्यं पुष्पं, लंबं स्रग्दामादि, न धारयेत्। न बहिः राजमार्गे दृश्यमानं वा । जलजं वर्जयित्वा रक्तमन्यन्माल्यं न धारयेत् । प्रसंगेनाह अन्येन विधृतं वस्त्रं न धारयेत् । पुष्पमुपानहौ चर्मपादुके तथा ॥

रुचिवैशद्यसौगन्ध्यमिच्छन्वक्त्रेण धारयेत् ॥
जातीलवंगकर्पूरकंकोलकटुकैः सह ।
तांबूलीनां किसलयं हृद्यं पूगफलान्वितम् ॥
रक्तपित्तक्षतक्षीणरूक्षोत्कुपितचक्षुषाम् ।
विषमूर्च्छामदार्तानामपथ्यं शोषिणां च तत् ॥
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे ।
द्विपत्रमेकं पूगं च सचूर्णखदिरं च तत् ॥

रुच्यादिकमिच्छन् वक्त्रेण जात्यादिभिः सह पूगफलान्वितं तांबूलीनां नागलतानां, किसलयं पल्लवं, धारयेत्। रक्तपित्ताद्युपहतस्य शोषिणश्च तत्सेवनमपथ्यं। रूक्षेण हेतुनोत्कुपितानि चक्षूंषियेषां ते रूक्षोत्कुपितचक्षुषः तेषां, अथवा रूक्षाणामुत्कुपितचक्षुषाञ्च । सुबोधम् ॥

उत्तिष्ठेत ततोत्यर्थमर्थेष्वर्थानुबन्धिषु ।
निन्दितं दीर्घमप्यायुरसन्निहितसाधनम् ॥
कृषिं वणिज्यां गोरक्षामुपायैर्गुणिनं नृपम् ।
लोकद्वयाविरुद्धां च धनार्थी संश्रयेत् क्रियाम्॥
मुक्तवेगश्च गमनस्वप्नाहारसभाः स्त्रियः ।

ततोऽनन्तरमर्थानुबन्धिषु धनहेतुषु, कार्येष्वत्यर्थं उत्तिष्ठेत यत्नोंचेष्टेत । यस्माद्दीर्घमप्यायुरसन्निहितसाधनं दारिद्र्ययुक्तं निन्दितं गर्हितम्। तथा धनार्थी कृष्यादिकमारभेत । अन्याश्च क्रियां धनलाभहेतुकामुभयलोकाविरुद्धां सतीमाश्रयेत् । तथा मुक्तवेग उत्सृष्टमूत्रपुरीषादिवेगश्च अध्वगमनादिकम् ॥

पाणिनाऽलभ्य निष्क्रामेद्रत्नपूज्याज्यमंगलम् ॥
सातपत्रपदत्राणो विचरे युगमात्रदृक्।
निशिचात्ययिके कार्ये दण्डी मौली सहायवान्
प्रावृत्य पर्यटेद्रात्रौ न प्रावृत्य शिरोऽहनि ।

तथा रत्नादिकमालभ्य सपूजं संस्पृश्य, कार्यार्थं निष्क्रामेत् । निर्गतश्च च्छत्रपादत्राणसंयुक्तो युगमात्रदृग्विचरेत् । युगो हस्तद्वयं, अन्ये हस्तचतुष्टयं युगमाहुः, तन्मात्रमग्रतः पश्यन् कृमिस्थाण्वादिभयात् । निशि रात्रावात्ययिके अतिप्रयोजनवति कार्ये, दण्डी मौली सहायवांश्च विचरेत्, अर्थबलादुक्तमनात्ययिके कार्ये नैव विचरेत् निशीति । मौली वेष्टितशिराः । तथा रात्रौ शिरः पिधाय पर्यटेत्, न त्वह्नि शिरः पिधाय पर्यटेत् परिभ्रमेदिति ॥

चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन्॥
नाक्रामेच्छर्करालोष्टबलिस्नानभुवो न च ।

चैत्यादीनां च्छायां नाक्रामेत् पदाभ्यां न लंघयेत् । चैत्यः प्रसिद्धः, पूज्योगुर्वादिः, अशस्तममंगल्यं वस्तु, तथा भस्मादिकमपि । तथा शर्करादिकमपि। शर्करा शिलाचूर्णं, बलिर्भूतोपहारः स्नानभूः यत्र कश्चित् स्नातः ॥

मध्याह्ने सन्ध्ययो रात्रावर्धरात्रे चतुष्पथम्।
न सेवेत न शर्वर्यां वृक्षचैत्यं न चत्वरम् ।
सूनाटवीशून्यगृहश्मशानानि दिवाऽपि न ॥

तथा मध्याह्नादिषु कालेषु चतुष्पथं न सेवेत । तथा शर्वर्यां सर्वस्यामपि रात्रौ, वृक्षादिकं न सेवेत । चत्वरं त्रिपथमाहुः, ग्रामात् बहिरवताराश्रयमन्ये, ग्रामीणसमाजस्थानामित्यन्ये, यस्तु लोके चत्वरइति प्रसिद्धः । सूनाटव्यादिकं दिवाऽपि न सेवेत । सूनाटवी वधारण्यम् ॥

न हुंकुर्याच्छवं पूज्यं प्रशस्तान्मंगलानि च ।
नापसव्यं परिक्रामेन्नेतराण्यनुदक्षिणम् ॥

चतुष्पथं नमस्कुर्यात् प्रज्ञातांश्च वनस्पतीन् ।
न व्याळव्याधिताशस्तैर्नादान्तक्षुत् पिपासितैः
न च्छिन्नपुच्छैर्नैकाक्षैर्गोपृष्ठेन च न व्रजेत् ।
नाऽतिप्रगेऽतिसायं वा न नभोमध्यगे रवौ ॥
नासन्निहितपानीयो नातितूर्णं न सन्ततम् ।
न शत्रुणा नाविदितैर्नैको नाधार्मिकैस्सह ॥

शवं न हुंकुर्यात्, मृतशरीरं हुंकारेण न तर्जयेत् । पूज्यादीनि चापसव्यं वामं, परित्यज्य न गच्छेत् । इतराणि तद्विपरीतानि, दक्षिणं त्यक्त्वा न गच्छेत् । चतुष्पथं, प्रज्ञातान् प्रसिद्धांश्च वनस्पतीन् वृक्षान्, नमस्कुर्यात् । व्याळादिभिश्च वाहैर्न व्रजेत् । व्याळः दुष्टः क्षुद्रः, अतिपूर्वाह्णादिकाले च न व्रजेत् । असन्निहितपानीयः अगृहीतपानीयः, तूर्णं वेगेन, न सन्ततं बहुकालमपितु विश्रम्यैव गन्तव्यामित्यभिप्रायः, शत्रुणा सह न व्रजेत्, अविदितैरविज्ञातस्वरूपैः, सह न व्रजेत्, एकाकी न व्रजेत्, अधार्मिकैश्च सह ॥

दद्याद्वर्त्माऽर्तवृद्धस्त्रीभारिचक्रिद्विजन्मने ।
स्नानभोजनपानानि वाहेभ्यो नाऽचरेत् पुरः॥
नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् ।
नाऽरोहेद्विषमं शैलं नावं संशयितां तरुम् ॥
निपातयेन्न लोष्टेन न फलेन फलं द्रुमात् ।
न वार्यमाणः प्रविशेन्नाद्वारेण न चाऽसने ॥
स्वयं तिष्ठेत् परगृहे युक्तनिद्रं न बोधयेत् ।
नाऽचरेत् पाणिवाक्पादहृङ्मेढ्रोदरचापलम् ॥
त्रिः पक्षस्य कचश्मश्रुनखरोमाणि वर्धयेत् ।
न स्वहस्तेन दन्तैर्वा स्नानश्चानु समाचरेत् ॥

तथा आर्तादिभ्यो वर्त्म दद्यात् मार्गं त्यजेत् । भारी भारवाहकः, चक्री गन्ध्यादिः । वाहेभ्यः पुरः स्नानादिकं नाचरेत् । पूर्वं स्ववाहानश्वादीन् स्नपयेत् भोजयेत् पाययेच्च पश्चात्स्वयं स्नायात् भुञ्जीत चेत्यर्थः । बाहुभ्यां च नदीं न तरेत् । अग्निस्कन्धाभिमुखो न गच्छेत् । अग्निस्कन्धो महानग्निराशिः । विषमं अतिनिम्नोन्नतप्रदेशं, शैलं पर्वतं, नारोहेत् संशयितामविज्ञातस्वरूपां, नावं, वृक्षं च सर्वं नारोहेत् । द्रुमाद्वृक्षात्, लोष्टेन फलेन वा फलं न पातयेत् । परगृहे वार्यमाणः प्रतिषिध्यमानप्रवेशो, न प्रविशेत् । अप्रसिद्धेन मार्गेण न प्रविशेत् । प्रविष्टश्च अदत्ते आसने न स्वयं तिष्ठेत् नोपविशेत् । युक्ता अविरुद्धा निद्रा यस्य तन्न बोधयेत् । पाण्यादिचापलञ्च नाचरेत् । हस्तचापलं वाद्यानुकरणादि, पादचापलमप्येवंप्रकारमेव, वाक्चापलं यत्किञ्चनवादित्वं, दृक्चापलं परयुवत्यादिदर्शनं, मेढ्रचापलं प्रासंगिकानुचितयोषित्गमनादि, उदरचापलं भोजनगृध्नुता । पक्षस्य मध्ये त्रीन् वारान् केशादिन् कर्तयेत्, स्वहस्तेन दन्तैर्वा न कर्तयेत् । कर्तयित्वा च स्नानमाचरेत् ॥

अथ जातान्नपानेच्छो मारुतघ्नैः सुगन्धिभिः ।
यथर्तुसंस्पर्शसुखैस्तैलैरभ्यंगमाचरेत् ॥
अभ्यंगो वातहा पुष्टिस्वप्नदार्ढ्यबृहत्वकृत् ।
दग्धभग्नक्षतरुजाक्लमश्रमजरापहः ॥
रथाक्षचर्मघटवत् भवन्त्यभ्यंगतो गुणाः ।
स्पर्शनेऽभ्यधिकोवायुः स्पर्शनं च त्वगाश्रयम् ॥
त्वच्यश्च परमभ्यंगोयस्मात्तं शीलयेदतः ।
शिरः श्रवणपादेषु तं विशेषेण शीलयेत् ॥
स केश्यः शीलितोमूर्ध्नि कपालेन्द्रियतर्पणः ।
हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम् ॥
पादाभ्यंगस्तु तत्स्थैर्यनिद्रादृष्टिप्रसादकृत् ।
पादसुप्तिश्रमस्तंभसंकोचस्फुटनप्रणुत् ॥
वर्ज्योऽभ्यंगः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः ।

अथानन्तरमनन्तरोक्तप्रकारेण कालमतिवाह्य उत्पन्नान्नपानेच्छः अभ्यंगमाचरेत् । केनेत्याह, तैलैः, किंभूतैः? वातघ्नैः सुगन्धिभिश्च ऋत्वनतिक्रमेण संस्पर्शसुखकरैश्च उष्णकाले शीतैः शीतकाले चोष्णैरित्यर्थः । अभ्यंगगुणानाह अभ्यंगेति । दग्धादित्रयस्य रुजया संबन्धः क्षतश्शस्त्रादिना । तथा रथाक्षादिवदभ्यंगात् गुणा भवन्ति, रथाक्षं चक्रनाभिः, तस्य चर्मघटयोश्च यथाऽभ्यंगेन श्लक्ष्णत्वं यथा मार्दवं, यथा च दार्ढ्यं, तथा शरीरस्यापि, यथा च रथाक्षस्य स्नेहस्पर्शनमात्रेण, चर्मणोमर्दनेन घटस्य स्नेहसंस्कारेणेति । यतश्च परमत्यर्थं, त्वच्यश्चाभ्यंगः तस्मादभ्यंगमाचरेत् । कथमित्याह स्पर्शन इति । स्पर्शनं त्वगाश्रितम् । स्पर्शने चावश्यं वायुना भवितव्यम् । अतोवाताऽबाधभयादित्यर्थः। शिरःप्रभृतिषु त-

मभ्यगं विशेषेण शीलयेत् । किमर्थमित्याह । सोऽभ्यंगः मूर्ध्नि शिरसि, शीलितः केश्यः केशेभ्यो हितः, कपालस्येन्द्रियाणाञ्च तर्पणः तृप्तिकरः । स्नेहेन कर्णपूरणं हनुमन्यादिशूलघ्नम् । पादादिषु तमभ्यंगं विशेषेण शीलयेत् । पादाभ्यंगस्तु तत्स्थैर्यादिकृत् पादसुप्त्यादिघ्नश्च । सुप्तिरिव सुप्तिः अभिघाताद्यचैतन्यम् । सर्वोऽभ्यंगः कफग्रस्तादिभिर्वर्ज्यः न सेव्यः । कफग्रस्तः श्लेष्मरोगार्तः ग्रस्तग्रहणमतिशयोपलक्षणार्थं । कृतसंशुद्धिः वमनविरेचनादिभिरचिरकालनिस्सृतदोषः॥

शरीरायासजननं कर्म व्यायाम उच्यते ॥
लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ।
विभक्तघनगात्रत्वं व्यायामादुपजायते ॥
वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत् ।
अर्द्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः
शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा ।

अनन्तरं व्यायामं शीलयेत् । क उच्यते व्यायामः । आह शरीरेति । येन कर्मणा क्रियमाणेन शरीरमायस्यते तद्व्यायामशब्देन वाच्यम् । तेनैतदुक्तं भवति कस्यचिच्चंक्रमणमेव व्यायामः कस्यचिदन्यदधिकमिति । तेन कृतेन किं भवतीत्याह लाघवमित्यादि । लाघवं देहस्य लघुत्वं । अन्यत् सुबोधं । वातपित्तरोगार्त्तो बालोवृद्धश्च व्यायामं त्यजेत् । स च व्यायामोबलवद्भिः पुरुषैः शीतकाले हेमन्तशिशिरयोः, वसन्ते च स्निग्धान्नभोजिभिः सद्भिरर्द्धशक्त्या निषेवणीयः यावच्छक्यते ततोऽर्द्धमिति । अन्यस्मिन् पुनरृतौ स्वल्पमेव॥

तं कृत्वाऽनुसुखं देहं मर्दयेच्च समन्ततः ॥
तृष्णा क्षयः प्रतमकोरक्तपित्तं श्रमः क्लमः ।
अतिव्यायामतः कासोज्वरः छर्दीश्च जायते ॥
व्यायामजागराध्वस्त्रीहास्यभाष्यादिसाहसं ।
गजं सिंह इवाऽकर्षन् भजन्नति विनश्यति ॥

तं च व्यायामं कृत्वा यथासुखं देहं मर्दयेत् सर्वं । यथोक्तप्रमाणातिक्रमादतिव्यायामेन कासादिरोगोत्पत्तिः । प्रसंगेनाह । व्यायामादीनां साहसमतिसेवां भजन् पुरुषो विनश्यति । यथा सिंहोविक्रमवानतिस्वल्पबलः महाबलं दन्तिनमाकर्षन् स्वयमेव विनश्यतीति ॥

उद्वर्त्तनं कफहरं मेदसः प्रविलायनम् ।
स्थिरीकिरणमंगानां त्वक्प्रसादकरं परम् ॥

अनन्तरं कषायद्रव्यैरुद्वर्त्तनं कुर्यात् । तद्गुणानाह कफहरमित्यादि ॥

दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ।
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित् ॥
उष्णांबुनाऽधःकायस्य परिषेको बलावहः ।
तेनैव तूत्तमांगस्य बलहृत् केशचक्षुषाम् ॥
नाऽनाप्लुत्य शिरः स्नायान्न जलेऽल्पे न शीतळे
स्नानोदकावतरणस्वप्नान् नग्नो न चाऽचरेत्॥
पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिणि ।

तदनु स्नानमाचरेत् । तच्चाग्न्युदीरणत्वादियुक्तं कण्ड्वादिघ्नं च । उष्णांबुनेत्यादि सुबोधं । शिरस्यनाप्लुते असिक्ते, न स्नायात् । जले नद्यादिस्थे स्वल्पे शीतळे च न स्नायात् । नग्नः अगृहीतपरिधानः, स्नानमुदकावतरणञ्च नाचरेत् । तथा स्वप्नञ्च नग्नोनाचरेत् । परवारिणि अन्यकृते तटाकादौ, पञ्चपिण्डाननुद्धृत्य न स्नायात् । पञ्चभिः पिण्डैरुद्धृतैरात्मनैव स्नानार्थं जलाशयः कृतो भवति ॥

नात्मानमीक्षेत जले न तटस्थो जलाशयम् ॥
न प्रतिस्फालयेदंबु पाणिना चरणेन वा ।
स्नात्वा न मृज्यात् गात्राणि धुनुयान्न शिरोरुहान्॥
निवसीताऽर्द्र एवाऽशु सोष्णीषे धौतवाससी ।
न त्वंबरं पूर्वधृतं न च तैलवसे स्पृशेत् ॥
वासोऽन्यदन्यच्छयने निर्गमे देवतार्चने ।
स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ॥
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ।

दर्पणवदात्मानं जले नेक्षेत । तटस्थः कूलस्थो,जलाशयं कूपादिकं, नेक्षेत । पाणिना पादेन वा जलञ्च प्रतिस्फालयेत् नाभिहन्यात् । स्नात्वा च पाण्यादिनांगानि न परिमार्जयेत् । केशांश्च स्नात्वा न धुनुयात् । आर्द्र एव धौतोष्णीषं धौतवाससी च निवसीत परिदध्यात् । उष्णीषः शिरःपट्टकं । स्नात्वा च स्नानकालधृतं वासो न स्पृशेत् । तैलं वसाञ्च स्नात्वा न स्पृशेत् । शयनाद्यवसरे अन्यदन्यद्वासः परिवर्त्तयेत् । निर्गमे देवतार्च्चने चान्यदन्यद्वासो निवसीत । अर्द्दिताद्यार्त्तानां स्नानं गर्हितं निन्द्यम् । आध्मानं वायुना जठरापूरणं, पीनसो नासास्रावः ।

अन्नपानविधानेन भुञ्जीतान्नं विनाऽत्ययात् ॥
अभिनन्द्य प्रसन्नात्मा हुत्वा दत्वा च शक्तितः ।
पाकं सजलमेकान्ते यथासुखमिति ब्रुवन् ॥
प्रयच्छेत्सर्वमुद्दिश्य पाचयेन्नाऽन्नमात्मने ।
नाऽन्नमद्यान्मुमूर्षूणां मृतानां दुःखजीविनां ॥
स्त्रीजितक्लीबपतितक्रूरदुष्कृतकारिणां ।
गणारिगणिकासत्रधूर्त्तानापणिकश्च न ॥
नोत्संगे भक्षयेत् भक्ष्यान् जलं नाञ्जलिनापिबेत्
सर्वश्च तिलसंबद्धं नाऽद्यादस्तमिते रवौ ॥
न भुक्तमात्र आयस्येन्न निषिद्धं भजेत्सुखं ।

ततोऽनन्तरमन्नपानविधानेनान्नं भुञ्जीत । अत्यये तु यथेच्छमेव । प्राप्तमाहारमभिनन्द्य प्रसन्नात्मा प्रसन्नहृदयः, हुत्वा चाग्निमुखे, शक्तितश्च दत्वा कृपणादिभ्यो यथाशक्तिद-त्वा सर्वं भूतग्राममुद्दिश्य, एकान्ते पाकं सर्वमाहार्यं तोदकं यथासुखमिति मन्त्रपदमिव ब्रुवन् दद्यात् । दानादिव्यवच्छे-देनात्मार्थमन्नं न पाचयेत् । मुमूर्षुप्रभृतीनामन्नं नाद्यात् । गणान्नं बहुवायत्तमन्नं नाद्यात् । आपणिको वणिक । उत्संगे गृहीत्वा भक्ष्यान्न भक्षयेत् । अञ्जलिना पाणिसंपुटेन, जलन्न पिबेत् । रवौ दिनकृति, अस्तमिते तिलसंबद्धं सर्वं भक्ष्यं नाद्यात् । भोजनादुत्थितः शरीरायासं न कुर्यात् । स्मृत्या-दिप्रतिषिद्धं सुखन्न सेवेत ॥

धर्मोत्तराभिरर्थ्याभिःकथाभिस्त्रिगुणात्मभिः ॥
मध्यं दिनस्य गमयेदिष्टशिष्टसहायवान् ।

दिनस्य च मध्यमिष्टैः शिष्टैश्च सहायैर्युतः कथाभिर्ग-मयेत् । किंभूताभिः धर्मप्रधानाभिः मध्यार्थाभिः अर्थबलात् स्वल्पकामाभिः । एवं त्रिगुणात्मभिः त्रिगुणो धर्मादीनां स्या-नवृद्धिक्षयलक्षणः ॥

न लोकभूपतिद्विष्टैर्न संगच्छेत नास्तिकैः ॥
कलिवैररुचिर्न स्यात् धीरः संपद्विपत्तिषु ।
श्रुतादन्यत्र सन्तुष्टस्तत्रैव च कुतूहली ॥
क्षान्तिमान् दक्षिणोदक्षः सुसमीक्षितकार्यकृत् ।
ह्रीमान् धीमान् महोत्साहः संविभागी प्रियाति[थिः ॥
अक्षुद्रवृत्तिर्गंभीरः साधुराश्रितवत्सलः ।
दाता पितृभ्यः पिण्डस्य यष्टा होता कृपात्मकः
अनुज्ञाता सुवार्तानान्दीनानामनुकंपकः ॥*
आश्वासकारी भीतानां क्रुद्धानामनुनायकः ।
पूर्वाभिभाषी सुमुखः सुशीलः पूज्यपूजकः ॥
वित्तबन्धुवयोविद्यावृत्तैः पूज्या यथोत्तरम् ।

लोकद्विष्टैराजद्विष्टैश्च सहसंगतिं न कुर्यात् । नास्ति-कैश्च । अदृष्टनास्तीति बोद्धारो नास्तिकाः । कलहं वैरञ्च न रोचयेत् । संपत्स्वापत्सु, च धैर्यमवलंबेत । शास्त्रश्रवणाद-न्यत्राशनादिके सन्तुष्टः, श्रुतेत्वसन्तुष्टः । उपनतादाधिकेना-ऽकांक्षा असन्तोषः । तत्रैव च श्रुते शेषविषये कुतूहलवान् । सर्वभूतेषु क्षान्तिमत्वादियुक्तोभवेत् । दक्षिणः पक्षपाती । अन्यत्सुबोधम् । पूज्यांश्च पूजयेत् । अतआह वित्तेत्यादि । धनवान् पूज्यः, अतोऽधिकं बन्धुः, अतोऽधिकमधिकवयाः, ततोऽधिकं विद्यावान्, ततोऽधिकं शीलवान् पूज्यइति यथोत्त-रार्थः । यो यस्मादुत्तरः स तस्मात् पूज्यइति ॥

आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम् ॥
सुतरामनुकंपेत नरकार्चिष्मदिन्धनम् ।
धर्म्यमर्थ्यं प्रियं तथ्यं मितं पथ्यं वदेद्वचः ॥

आत्मद्रोहादियुक्तमत्यन्तं कृपया सत्पथयोजनादिना, परमनुकंपेत । सर्वस्य च धर्म्यादिकं वाक्यं वदेत् । धर्मा-दनपेतं धर्म्यं, अर्थादनपेतमर्थ्यं, प्रियं श्रोतुः, तथ्यं सत्यं, मितं स्वल्पं, पथ्यं हितानुबन्धि ॥

नाऽत्मानमवजानीयान्न स्तूयान्न च पीडयेत् ।
न हीनानवमन्येत वृत्तार्थांगबलश्रुतैः ॥
नाऽरुन्तुदः स्यान्न क्रूरो न तीक्ष्णोनोऽपतापवान्
हेतावीर्ष्येन्न तु फले पापं पापेऽपि नाचरेत् ॥
परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैनं निपातयेत् ।
अन्यत्रपुत्राच्छिष्याद्वा शासनार्हाद्धिताशयः ॥
नृत्यवादित्रगीतादि नोद्भणामाचरेत् क्रियाम् ।
प्रसिद्धकेशवाग्वेषशमसान्त्वपरायणः ॥

* अनुयाता शुचाऽर्तानामित्यपि पाठः ॥

ऊर्ध्वं नाभेः शरीरस्य स्पृशेन्नाऽधरवाससा ।
न कुर्यान्मिथुनीभूय शौचं प्रति विलंबनम् ॥
नाऽसंवृतमुखो हास्यक्षवोत्गारविजृंभणम् ।
पाणिद्वयेन युगपत् कण्डूयेन्नात्मनः शिरः ॥
वहेन्न भारं शिरसा युगपच्चाग्निवारिणी ।
नासिकान्न विकुष्णीयाद्दशनान्न विघट्टयेत् ॥
कुर्याद्विलेखनच्छेदभेदास्फोटनमर्दनम् ।
पादं पादेन नाऽक्रामेन्न कण्डूयेन्न शौचयेत् ॥
न कांस्यभाजने तौ च नोपविष्टः प्रसाधयेत्

आत्मनश्शरीरस्यावज्ञां न कुर्यात् । न चात्मानं स्तूयात् । न च पीडयेत् । वृत्तादिहीनानामवमानो न विधेयः । अरुन्तुदोमर्मस्पृक् । उपतापः परनिर्बन्धः । हेतौ सेवादिके ईर्ष्येत् । ईर्ष्या नाम यत् परस्यभूतं तत् कथं मम नेतिबुद्धिः । न तु तत्फले अर्थादिके, फलार्थिना हि तत्कारणे प्रयतितव्यमित्यर्थः । पापशीलेऽप्यभद्रं नाचरेत् । परस्य च दण्डं नोद्यच्छेत् । क्रुद्धश्च सन् परस्य एनं दण्डं न पातयेत् पुत्रं शासनार्हं शिष्यश्चान्यत्र वर्जयित्वा । अशासनार्हयोस्तयोरपि न निपातयेत् । हिताशयस्तद्धितकामः । नृत्तादिक्रियामुद्धणामतिमात्रं नाऽचरेत् । देशकालादप्रसिद्धान् केशदीन् न धारयेत् । नाभेरुपरिशरीरमधःकायवाससा न स्पृशेत् । कृतव्यवायश्च शीघ्रं शौचमाचरेत् । अस्थगितास्योहास्यादिकं नाऽचरेत् । हस्तद्वयेन युगपच्छिरो न कण्डूयेत्। अन्यत्सुबोधम् । निष्प्रयोजनं विलेखनादिकं नाचरेत् । आस्यादिवादनं सर्वथैव न कुर्यात् । पादेन पादं नाऽक्रामेत् । न च कण्डूयेत् । न च शौचयेत् तौ पादौ कांस्यमये भाजने कृत्वा न शौचयेत् ॥

अभीक्ष्णं निर्मलान् दध्यान्नखपादमलाशयान्
नाऽसमिद्धमुपासीत हुताशं नैव चाशुचिः ।
नाऽनुवातं न विवृतो न क्रान्तो नाऽन्यमानसः
धमेन्नाऽस्येन न स्कन्देन्नाऽधः कुर्यान्न पादतः
सततं न निरीक्षेत चलसूक्ष्माप्रियाणि च ॥
नाप्रशस्तं न विण्मूत्रं न दर्पणममार्जितम् ।
उद्यन्तमस्तमायान्तं तपन्तं प्रतिमागतम् ॥
उपरक्तं च भास्वन्तं वाससा वा तिरोहितम् ।
नाऽन्यदप्यतितेजस्वि न क्रुद्धस्य गुरोर्मुखम् ॥
स्त्रियं स्रवन्तीं नोदक्यां न नग्नां नाऽन्यसंगताम्
न पत्नीं भोजनस्वप्नक्षुतजृंभादुरासने ॥
शयीत नैकशयने न चाश्नीयात्तया सह ।
तामनीर्ष्यश्च गोपायेत् स्वैरिणीं नाधिवासयेत्
नोच्छिष्टस्तारकाराहुतुहिनांशुदिवाकरान् ।
पश्येन्न यायान्न पठेन्न स्वप्यान्न स्पृशेच्छिरः ॥
पाययन्तीं चरन्तीं वा नान्यस्मै गां निवेदयेत्
अर्केन्दुपरिवेषोल्काशतक्रतुधनूंषि च ॥
नान्यद्देवार्चने कर्म कुर्याद्धावेन्न वर्षति ।
तिथिं पक्षस्य न ब्रूयात् नक्षत्राणि न निर्दिशेत्
नाऽऽत्मनो जन्मलग्नर्क्षधनसारं गृहे मलम् ।
प्रकाशयेन्नावमानं न च निस्नेहतां प्रभोः ॥

नखादीन् निर्मलान् दध्याद्धारयेत् । मुखेन हुताशनमग्निं न धमेत् मुखवातेन नोदीरयेदित्यर्थः । न स्कन्देत् न विकिरेत् शयनासनादिष्वधो न कुर्यात् । उदयादावस्थास्थितं सूर्यं नेक्षेत । उपरक्तोराहुच्छादितः । अन्यदप्यतितेजोयुक्तं नेक्षेत । गुरोः क्रुद्धस्य मुखं नेक्षेत । स्रवन्तीं मूत्रयमाणां, स्त्रियं नेक्षेत । उदक्यां रजस्वलामपि, नेक्षेत । अन्यपुरुषमिथुनीभूतांश्च नेक्षेत । भोजनादिकां क्रियां कुर्वन्तीं दुरासने चोपविष्टां स्वपत्नीं नेक्षेत । न च स्वभार्यया सहैकशयने शयीत । तयासह नाश्नीयात् । ईर्ष्यांश्चाकुर्वन् स्वगृहिणीं रक्षेत्। स्वैरिणीं च स्त्रियं स्वगृहे नाधिवासयेत् । भर्तारं जीवन्तं परित्यज्यस्वेच्छया गृहान्निर्गता स्वैरिणी । उच्छिष्टः अप्रयतः, तारकादीन् न पश्येत् । यानादिकं च न कुर्यात् । पाययन्तीं वत्सं, चरन्तीं भक्षयन्तीं सस्यादि, गामन्यस्मै न दर्शयेत् । अर्केन्दुपरिवेषादिकश्चान्यस्मै न दर्शयेत् । परिवेषोमण्डलं । देवार्चनप्रसंगे अन्यत् कर्म न कुर्वीत । वर्षति पतति पानीये, न धावेत् । पक्षस्य तिथिं न ब्रूयात् । अद्यामावास्येति न कस्मैचित् कथयेदित्यर्थः । पक्षस्य मध्ये सर्वां तिथिं न ब्रूयात् इति केचित्, ते पक्षशब्दस्य प्रयोजनं प्रष्टव्याः । आत्मनश्च जन्मलग्ननक्षत्रादिकं न कथयेत् । गृहे मलं गृहदोषं, आत्मन्यवमानं प्रभोः निस्नेहतां च न लोके प्रकाशयेत् ॥

पुरोवातातपरजस्तुषारपरुषानिलान् ।
अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम् ॥
सशब्दमलिनं हस्तभ्रूनेत्रोत्क्षेपवादिताम् ।
कूलच्छायां सुरापानं व्याळदंष्ट्रिविषाणिनः ॥
हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः ।
सन्ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम् ॥
आरोग्यजीवितैश्वर्यविद्यासुस्थिरमानिताम् ।
तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ॥
मद्यातिसक्तिं विस्रंभस्वातन्त्र्ये स्त्रीषु च त्यजेत्

पुरोवातादीनां त्यजेदित्युत्तरेण संबन्धः । हस्ताद्युत्क्षेपेण प्रायेण जनोवदति तत् प्रतिषिद्धम् । हीनातिसेवां च त्यजेत् । आरोग्यादीनां स्थिरज्ञानं विश्वासः अहमरोगः अहं गृहीतविद्यः इत्यादिकं त्यजेत् उपेक्षया नाशभयात् ॥

नैकाहमप्यधिवसेद्वास्तु तच्छास्त्रगर्हितम् ॥
न देशं व्याधिबहुलं नावैद्यं नाप्यनायकम् ।
नाधर्मिजनभूयिष्ठं नोपसृष्टं* न पर्वतम् ॥

एकाहमपि वास्तुविद्यागर्हितं गृहं नाधिवसेत् । व्याधिबहुलादिकं देशञ्च । उपसृष्टं सोपसर्गं मारकादिना ॥

वसेत् प्राज्यांबुभैषज्यसमित्पुष्पतृणेन्धने ।
सुभिक्षक्षेमरम्यान्ते पण्डितैर्मण्डिते पुरे ॥
नरामराणां सिद्धानां शास्त्राणाञ्चाजुगुप्सकः
आधारकास्त्रिवर्गस्य यथायोग्यं जनस्य च ॥
दश कर्मपथान्रक्षन् जयन्नभ्यन्तरानरीन् ।
हिंसास्तेयान्यथाकामं पैशून्यं परुषानृतम् ॥
संभिन्नलापं व्यापादमभिध्यां दृग्विपर्ययम् ।
पापं कर्मेतिदशधा कायवाङ्मानसैस्त्यजेत् ॥

प्रभूतांब्वादिके पुरे वसेत् । गुणवन्नरादीनाञ्चाजुगुप्सकः अद्वेष्टा । दश कर्मपथान्रक्षन् अभ्यन्तरानरीन् रागादीन् जयन् त्रिवर्गं साधयेत् । दश कर्मपथाः कायवाङ्मानसाः । तत्र कायिकास्त्रयः प्राणातिपातः, परद्रव्यापहारः, अगम्यागमनमिति । वाचिकं चतुर्विधं असत्यवचनं, परेषां भेदकृद्वचनं, परुषवचनं, असंबन्धप्रलापश्च । मानसं त्रिविधं अभिध्या, व्यापादो, मिथ्यादृष्टिश्च । परस्वस्यान्यायेन स्पृहाऽभिध्या । व्यापादः सत्वविद्वेषः । दृग्विपर्ययः शास्त्रदृष्टिवैपरीत्यं नास्तिकत्वमितियावत् ॥

परोपघातक्रियया वर्जयेदार्जनं श्रियः ।
अर्थानां धर्मलब्धानामदाताऽपि ह्यसंभवात् ॥
स्वर्गापवर्गविभवानयत्नेनाधितिष्ठति ।

परोपघातेन श्रिय आर्जनं वर्जयेत् । योह्यर्थो दानाद्यर्थमुपयुज्यते सोऽधर्मेणार्जितोयदि दत्तोनिष्फल एव । वरं धर्मपरस्य साधुधनासंभवाददानम् । एतदेवाह अर्थानामित्यादि । धर्मलब्धानामर्थानामसंभवाददाताऽपि स्वर्गादीनयत्नेनैवाधितिष्ठति ॥

सायं भुक्त्वा लघु हितं समाहितमनाः शुचिः
शास्तारमनुसंस्मृत्य स्वचर्यां चाथ संविशेत् ।
देशे शुचावनाकीर्णे द्वित्राप्तपरिचारकः ॥
युक्तोपधानं स्वास्तीर्णं विस्तीर्णाविषमं सुखम्।
जानुतुल्यं मृदु शुभं सेवेत शयनासनम् ॥
प्राग्दक्षिणशिराः पादावकुर्वाणोगुरून्प्रति ।
पूर्वापरदिशोभागे धर्ममेवानुचिन्तयन् ॥

अथ सायान्हे पुनर्भोजनं कृत्वा समाहितमनाः शास्तारं महेश्वरादिकं संस्मृत्य स्वचर्यां च शरीरस्थितिं विकल्प्य शय्यायां संविशेत् । संवेशनं निषदनाध्यासनं । शुच्यादौ देशे शयनमासनं च सेवेत । आकीर्णं बहुजनाध्यासितं, युक्तोपधानं दर्शनीयशिरोगण्डिकं, जानुतुल्यमुच्चतया, प्राचीं दक्षिणां वा दिशं प्रति कृतशिराः । गुरून् प्रति च पादावकुर्वाणः । वेश्मनः पूर्वे अपरे वा दिग्भागे शयनासनं सेवेत ॥

आददीत सदा देहादित्थं सारमसारतः ।
बिभ्यत् प्रतिक्षणं मृत्योरयथातथचेष्टितात् ॥
आरोग्यविभवप्रज्ञावयोधर्मक्रियावतः ।
सुखमायुर्हितं चोक्तं विपरीतं विपर्यये ॥

इत्थमनेनानन्तरोक्तप्रकारेण सारं गृह्णीयात् असाराद्देहात् । एतदेव हि तत्सारं देहे यत्साधुशीलता । किं

---

* सोपसृष्टमित्यपि पाठः ।

कुर्वन्नाह । अयथातथचेष्टितादनियताचारिणो, मृत्यो: प्रतिक्षणं बिभ्यत् भयमाकलयन् मम कदाचिन्मृत्युरापतिष्यतीति । यच्चायुर्जीवितं तदारोग्यादियुक्तस्य हितं सुखञ्च साधुभिरुक्तम् । एतद्विपर्यये विपरीतमसुखमहितञ्च ॥

सर्वतेजोनिधानं हि नृप इत्युच्यते भुवि ।
अदूषयन्मनस्तस्मात् भक्तिमांस्तमुपाचरेत् ॥

पर्यस्तिकोपाश्रयकोपहास-
विवादनिष्ठेवनजृंभणानि ।
सर्वाः मकृत्यभ्याधिकाश्च चेष्टा-
स्तत्सन्निधाने परिवर्जयेत्तु ॥

तथा सकलतेजोनिधानं राजशब्दवाच्यम् । मनसा शुद्धेन भक्त्या चोपचरेत् सेवेत । तत्सान्निधाने च पर्यस्तिकादीनि वर्जयेत् । पर्यस्तिका वस्त्रादिना स्वपृष्ठजानुपरिवेष्टनम् । उपविष्टस्य उपाश्रयो भित्यादिके शरीरसंक्रमणम् ॥

सत्वाद्यवस्थाविविधाश्च तास्ताः
सम्यक् समीक्ष्याऽत्महितं विदध्यात् ।
अन्योऽपि यः कश्चिदिहाऽस्ति मार्गो
हितोपदेशेषु भजेत तं च ॥

सत्वरजस्तमसां नानाविधानवस्थाविशेषान् परीक्ष्याऽत्महितं करणीयम् । दुस्तराहि धर्मप्रतिबन्धका रजस्तमोविकाराः । तथा मनुवृद्धादिप्रणीतेषु हितोपदेशशास्त्रेषु यो मार्गोऽस्ति तमपि सेवेत ॥

इति चरितमुपेतः सर्वजीवोपजीव्यं
प्रथितपृथुगुणौघो रक्षितोदेवताभिः ।
समधिकशतजीवी निर्वृतः पुण्यकर्मा
व्रजति सुगतिनिम्नो देहभेदेऽपि तुष्टिम् ॥

इति सर्वभूतोपजीव्यं चरितं प्राप्तः पुरुषः तथा प्रख्यातविस्तीर्णगुणसमूहः देवताभीरक्षितः परिपूर्णसंवत्सरशतजीवी च देहनाशेऽपि तुष्टिं अपवर्गाख्यां, व्रजति गच्छति । किंभूतः सुगतौ सुवर्त्मनि, निम्नः मग्नः ॥

इतीन्दुविरचितायामष्टांगसंग्रहव्याख्यायां
सूत्रस्थाने तृतीयोऽध्यायः.

# चतुर्थोऽध्यायः

अथात ऋतुचर्यां नामाध्यायं व्याख्यास्यामः
इतिह स्माहुरात्रेयादयो महर्षयः ॥

इह स्वस्थवृत्तं प्रकृतम् । तच्च पूर्वस्मिन्नध्याये ऋतुसाधारण्येनोक्तम् । अतः ऋतुविशेषप्रदर्शनार्थमध्याय आरभ्यते अथात इत्यादि । पूर्ववत् ॥

कालोहि नाम भगवाननादिनिधनो यथोपचितकर्मानुसारी । यदनुरोधादादित्यादयः खादयश्च महाभूतविशेषास्तथा तथा विपरिणमन्तो जन्मवतां जन्ममरणस्यर्तुरसवीर्यदोषदेहबलव्यापत्संपदां च कारणत्वं मत्ययतां प्रतिपद्यन्ते ॥

ऋतुः कालविभागः अतउच्यते कालोहीति । न विद्यते आदिनिधने प्रारंभपरिसमाप्ती यस्य स तथाविधः । यथोपचितकर्मानुसारी सर्वभूतानि च पूर्वदेहोपचितकर्मानुगुण्येनानुसरतीति । उपचितकर्मानुगुण्येन कर्मफलेषु निमित्तकारणतां यातीत्यर्थः । यदनुरोधेन यस्य कालस्यानुरोधेन निर्वाहिणाऽदित्यादयः आकाशादयश्च पञ्चमहाभूतविशेषाः, तथा तथा नानाविधैः प्रमाणजातिसंस्थानवर्णादिविशेषैः, परिणमन्तः जन्मवतां भूतानां, जन्मनो मरणस्य च प्रत्ययतां कारणतां, प्रतिपद्यन्ते अंगीकुर्वन्ति । एकेनाऽदिशब्देन ग्रहनक्षत्रादीनां ग्रहणं । द्वितीयेनानलपवनादीनां महाभूतानां । तथा ऋतूनां रसादीनां च यथास्वं व्यापदः संपदश्च तत्राऽदित्यादयः परिणमन्तः यदनुरोधात् यस्य निर्वाहात्, कारणतां प्रतिपद्यन्ते स कालः । तथाहि त एवाऽदित्यादयः प्रतापादिपरित्यागसंग्रहादिना ऋतुविशेषान् कुर्वन्तः कालानुरोधेन दृश्यन्ते । कालविशेषेण च महाभूतानां केनचित् परिणामेन जन्म प्राणिनां अन्येन मरणम् । एवं रसादीनां विशेषोमहाभूतपरिणामेन कालकृत एव । एतेन कालसत्भावे प्रमाणमप्युक्तम् । यतोयोऽयं जगत्कारणाभिमतेष्वाऽदित्यखादिषु सदैव परिनिष्ठितात्मस्वातिशयेन कदाचित् कस्यचिद्भावस्याऽविर्भावो भवति, कदाचित् कस्यचित्तिरोभावः न च तेषामेवाऽदित्यादीनामन्यथाभावः । तत्रावश्यं निमित्तान्तरेण भवितव्यम् । एवं अन्यथानुपपत्त्या यत्तन्निमित्तान्तरं स काल इति ॥

**स मात्राकाष्ठाकलानाडिकामुहूर्तयामाहोरात्रपक्षमासर्त्वयनवर्षभेदेन द्वादशधा विभज्यते ॥**

स च कालः मात्रादिभिर्भेदैः द्वादशभिस्तन्त्रव्यवहारार्थं विभज्यते ॥

**तत्राक्षिनिमेषोमात्रा । ताः पञ्चदश काष्ठा । तास्त्रिंशत् कला । ताः सदशभागा विंशतिर्नाडिका । नाडिकाद्वयं मुहूर्तश्च । ते तुल्यरात्रिन्दिवे राशिभागे चत्वारः पादोना यामः । तैश्चतुर्भिरहो रात्रिश्च । पञ्चदशाहोरात्राः पक्षः । पक्षद्वयं मासः । स शुक्रान्तः । तैर्मार्गशीर्षादिभिर्द्विसंख्यैः क्रमाद्धेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदाख्याः षड्तवो भवन्ति । तेषु शिशिरादयस्त्रयो रवेरुदगयनमादानञ्च । शेषा दक्षिणायनं विसर्गश्च । तावादानविसर्गौ वर्षम् ॥**

सुबोधम् । विंशतिः कलाः कलायादशभागसहिताः नाडिका । नाडिकाद्वयशब्देनोच्यते मुहूर्तः । ते च मुहूर्ताश्चत्वारः मुहूर्तचतुर्भागेन हीनाः यामः । यत्र रात्रेर्दिवस्य च साम्यं तत्रैवम् । अन्यत्र तु वृद्धिहानी स्वबुध्योह्ये । मार्गशीर्षादिमासद्वयक्रमेण हेमन्ताद्याख्याः षड्तवो भवन्ति । तेषु षड्तुषु मध्ये त्रयः शिशिरवसन्तग्रीष्मा रवेस्तिग्मांशोरुदगयनं उदीचीप्रस्थानं, आदानञ्च तदुच्यते । शेषास्त्रयोरवेर्दक्षिणायनं विसर्गश्चोच्यते । तौ वर्षम् ॥

**तयोरादानमाग्नेयम् । तस्मिन् खलु कालस्वभावमार्गपरिगृहीतोऽत्यर्थोष्णगभस्तिजालमण्डलोऽर्कस्तत्संपर्काद्वायवश्च तीव्ररूक्षाः सोमजं गुणमुपशोषयन्तो जगतः स्नेहमाददाना ऋतुक्रमेणोपजानितरौक्ष्या रूक्षान् रसांस्तिक्तकषायकटुकानभिप्रबलयन्तो नृणां दौर्बल्यमावहन्ति ॥**

तयोश्चाऽदानविसर्गयोरादानमाग्नेयम् । तदा हि भावारंभकस्याग्नेर्बलमवश्यं भवतीत्यर्थः । तस्मिन्नित्यादि आदानकालस्वभावेनोत्तरमार्गगमनेन चात्यर्थमुष्णकिरणसमूहव्याप्तमण्डलो भगवानंशुमाली तत्संबन्धेन च वायवोऽत्यन्तरूक्षाः सोमजं गुणमम्भागमुपशोषयन्तः जगतः स्थावरजंगमस्य, ऋतुक्रमेण दिनानुदिनं स्नेहं गृह्णाना दत्तरौक्ष्याश्चातिरौक्ष्येण युक्तान् तिक्तकषायकटुकान् रसानभिवर्धयन्तः नृणां मनुष्यजातीनां, दौर्बल्यं हीनबलतां, कुर्वन्ति ॥

**विसर्गस्तु सौम्यः । तस्मिन्नपि कालमार्गमेघवातवर्षाभिहतप्रभावे दक्षिणायनगेऽर्के शशिनि चाव्याहतबले शिशिराभिर्भाभिः शश्वदाप्यायमाने माहेन्द्रसलिलप्रशान्तसन्तापे जगत्यरूक्षारसाः प्रवर्धन्तेऽम्ललवणमधुरा यथाक्रमं बलं चोपचीयते नृणामिति ॥**

एतद्विपर्ययत्वाद्विसर्गस्य सुबोधत्वम् ॥

**भवतिचात्र**

**हेमन्ते शिशिरे चाग्र्यं विसर्गादानयोर्बलम् ।**
**शरद्वसन्तयोर्मध्यं हीनं वर्षानिदाघयोः ॥**

भवति चात्रेति पद्यारंभे तन्त्ररीतिः । विसर्गादानयोर्मध्ये हेमन्ते शिशिरे च पुरुषाणां बलाधिकता भवति । हेमन्ते विसर्गस्य परप्रकर्षाधिरोहात् । शिशिरे त्वादानेनाव्याप्तत्वात् । शरद्वसन्तयोरादानविसर्गयोर्मध्यत्वान्मध्यबलता । ग्रीष्मे आदानस्य परप्रकर्षाधिरोहात्, वर्षासु च विसर्गेणाव्याप्तत्वाद्धीनबलत्वम् ॥

**धूमधूम्ररजोमन्दास्तुषाराविलमण्डलाः ।**
**दिगादित्यामरुच्छैत्यादुत्तरोरोमहर्षणः ॥**
**लोध्रप्रियंगुपुन्नागलवल्यः कुसुमोज्वलाः ।**
**दृप्ता गजाजमहिषवाजिवायससूकराः ॥**
**हिमानीपटलच्छन्ना लीनमीनविहंगमाः ।**
**नद्यः सबाष्पाः सोष्माणः कूपापश्च हिमागमे ॥**
**देहोष्माणो विशन्तोऽन्तः शीते शीतानिलाहताः**
**जठरे पिण्डितोष्माणं प्रबलं कुर्वतेऽनलम् ॥**
**विसर्गे बलिनां प्रायः स्वभावादिगुरुक्षमम् ।**
**बृंहणान्यन्नपानानि योजयेत्तस्य युक्तये ॥**

**अनिन्धनोऽन्यथा सीदेदत्युदीर्णतयाऽथवा ।**
**धातूनपि पचेदस्य ततस्तेषां क्षयान्मरुत् ॥**
**तेजःसहचरः कुप्येच्छीतः शिते विशेषतः ।**

शिशिरे हेमन्तविधेरतिदेशाय लाघवविकल्पादादानक्रमभंगेनादौ हेमन्तउच्यते । त्रिविधोहि ऋतुर्मासस्वरूपेण राशिस्वरूपेण स्वलक्षणस्वरूपेण च तत्र मासस्वरूपं द्विसंख्यैर्मार्गशीर्षादिभिरित्यादिनोक्तम् । राशिस्वरूपं लोके प्रसिद्धं यथा धनुर्मकरौ हेमन्तइत्यादि । धूमधूम्रेत्यादिनास्वरूपलक्षणमुच्यते। प्रयोजनञ्च विद्यते ऋतुस्वलक्षणोक्तेर्हीनयोगादिचतुष्टयजं यत् ज्ञानं । धूमवत् धूम्रेण मलिनेन रजसा मन्दाः अपटवः दिशः आदित्यश्च तथा तुषारेणाऽविलानि मण्डलानि यासां तादृशस्तथोक्ताः, आदित्यश्च तुषाराविलमण्डलः । उत्तर उत्तरीयोवायुः शैत्येन रोमहर्षणः । लोध्रादयश्च तदा कुसुमैरुज्वलाभवन्ति । गजादयश्च दृप्ताः सदर्पाः । नद्यश्च हिमानीपटलेन च्छन्नाः स्थगिताः, मीनाः विहंगमाश्च दीनानिस्संचारा यासु तास्तथोक्ताः तथा सबाष्पाः । तथा कूपापः सोष्माणो भवन्ति । तथा शीते काले हेमन्तशिशिरयोः, पुरुषाणां देहोष्माणः स्वभावादिगुरुक्षमं प्रबलमनलं कुर्वते । किंभूतानां विसर्गत्वात् बलवताम् । किंभूता देहोष्माणः बहिः रूद्धेन बलवताच शीतेन वायुना आहता पुनरन्तरे प्रविशन्तः । किंभूतमग्निं पिण्डितोष्माणं प्रविष्टैर्देहोष्माभिर्मिश्रीभूतमित्यर्थः। स्वभावादिगुरुक्षमं तज्जरयितुं शक्नोतीत्यर्थः । स्वभावगुरुं द्रव्यस्वरूपेणैव गुरुं, यथा माषादि, आदिग्रहणेन मात्रासंयोगसंस्कारपरिणामानां ग्रहणम्। तस्याग्नेर्युक्तत्वे समवाहनाय बृंहणान्यन्नपानानि योजयेत् । यद्येवं न क्रियते ततोबाह्याग्निरिव निरिन्धनःसीदेत् नाशं प्राप्नुयात् । अत्युदीर्णतया वा धातूनपि पचेत् । तेषां धातूनां क्षयान्मरुद्वायुः तेजोमिश्रितः कुप्येत् ॥

**अतो हिमे भजेत्स्निग्धान् साद्वम्ललवणान्रसान्**
**विलेशयौदकानूपप्रसहानां भूतानि च ।**
**मांसानि गुडपिष्टोत्थमद्यान्यभिनवानि च ॥**
**माषेक्षुक्षीरविकृतिवसातैलनवौदनान् ।**
**व्यायामोद्वर्तनाभ्यंगस्वेदधूमाञ्जनातपान् ॥**
**सुखोदकं शौचविधौ भूमिगर्भगृहाणि च ।**
**सांगारयानां शय्यां च कुथकंवलसंस्कृताम् ॥**
**कुंकुमेनानुलिप्तांगोगुरुणाऽगरुणाऽपि वा ।**
**लघूष्णैः प्रावृतः स्वप्यात् कालेधूपाधिवासितः**
**पीनांगनांगसंसंगनिवारितहिमानिलः ।**

शीतकाले तस्मात् स्निग्धमधुरादीन् रसान् भजेत् तस्य मरुतः कोपरक्षार्थम् । स्निग्धानिति घृतादिसंस्कृतान्, अन्यत्सुबोधम् । विलेशयादेर्मांसानि भूतानि यत्नपुष्टस्य प्राणिनः संबन्धीनि, तथा गुडोत्थानि पिष्टोत्थानि च नवानिमद्यानि गुडोत्थानि यानि गुडेन प्रधानेन क्रियन्ते, न त्विक्षुरसेन, पिष्टं शालिपिष्टम् । अंगारयानमग्निशकटिका । कुथं कार्पासादिपूर्णम् । गुरुणा अगरुणा बहुना अगरुसारेण, कुंकुमेन वा दिग्धः उपलिप्तांगः लघूष्णैश्चर्मकौशेयादिभिः प्रावृतस्तत्सुचिते काले स्वप्यात् । उपचितशरीरकामिनीवपुस्संबन्धपरिहृतशीतपवनस्सन् ॥

**शिशिरे शीतमधिकं मेघमारुतवर्षजम् ॥**
**रौक्ष्यं चाऽदानजं तस्मात् कार्यः पूर्वोऽधिकं वि-**
**[धिः ।**

शिशिरे हेमन्तस्वरूपाधिक्यात् हेमन्तविधिरेवाधिकः कार्यः । यतः शिशिरे बहिः शीतेनात्यन्तं रुध्यन्ते देहोष्माणः । आदानत्वाच्च रौक्ष्यं जायते ॥

**वसन्ते दक्षिणोवायुराताम्रकिरणोरविः ॥**
**नवप्रवाळत्वक्पत्राः पादपाः ककुभोऽमलाः ।**
**किंशुकाशोकचूतादिवनराजिविराजिताः ॥**
**कोकिलालिकुलालापकलकोलाहलाकुलाः ।**
**शिशिरे सञ्चितःश्लेष्मा दिनकृद्भाभिरीरितः॥**
**तदा प्रबाधमानोऽग्निं रोगान् प्रकुरुतेबहून् ।**

वसन्तेत्यादिना वसन्तस्वरूपलक्षणं वर्णयति । वसन्ते वायुर्दाक्षिणात्योभवति, रविश्चैष लोहितदीधितिः । नवाः प्रवाळादयोयेषु पादपेषु ते तथोक्ताः प्रवाळमभिनवोद्भिन्नं किसलयम् । ककुभी दिशो निर्मलाः । तथा किंशुकादिभिः या वनराजयः ता विराजिताः ककुभोभवन्ति । तथा कोकिलानां अलिकुलानां भ्रमरसन्ततीनां चाऽलापैः यः कलोमधुरः कोलाहलः तेनाऽकुलाः । पूर्वं शिशिरे मधुरस्निग्धादिना आहारेणश्लेष्मा सञ्चितः अतिशीतेन स्त्यानत्वान्न कुपितः संप्रति दिनकृत्प्रभाभिः विलायितः द्रवस्वरूपत्वात् विपरी-

तस्याग्नेः बाधां करोति । तद्बाधया चानेकरोगोत्पत्तिः ॥

अतोऽस्मिंस्तीक्ष्णवमनधूमगण्डूषनावनम् ॥
व्यायामोद्वर्त्तनक्षौद्रयवगोधूमजांगलान् ।
सेवेत सुहृदुद्यानयुवतीश्चमनोरमाः ॥
स्नातः स्वलंकृतः स्रग्वी चन्दनागरुरूषितः ।
विचित्रामत्रविन्यस्तान् सहकारोत्पलांकितान्
निगदांश्चाऽसवारिष्टशीधुमार्द्वीकमाधवान् ।
क्वथितं मुस्तशुण्ठ्यंबु सारांभः क्षौद्रवारि वा ॥
गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ।

अतः कारणात् श्लेष्मशमनार्थं तीक्ष्णवमनादिकं सेवेत । अन्यत् सुबोधम् । चन्दनागरुभ्यां रूषितः उपलिप्तः, आसवादीन्निगदान् देशकालाद्यनुपहतान् । सारांभः असनखदिरचन्दनादिसारसंस्कृतांभः। तदा गुर्वादींस्त्यजेत् ॥

ग्रीष्मेऽतसीपुष्पनिभस्तीक्ष्णांशुर्दावदीपिताः ॥
दिशोज्वलन्तिभूमिश्च मारुतोनैरृतः सुखः ।
पवनातपसंस्वेदैर्जन्तवोज्वरिताइव ॥
तापार्ततुंगमातंगमहिषैः कलुषीकृताः ।
दिवाकरकरांगारनिकरक्षपितांभसः ॥
प्रवृद्धरोधसोनद्यः च्छायाहीनामहीरुहाः ।
विशीर्णजीर्णपर्णाश्चशुष्कवल्कलतांकिताः ॥
आदत्ते जगतस्तेजस्तदाऽदित्योभृशं यतः ।
व्यायामातपकट्वम्ललवणोष्णं त्यजेदतः ॥
मद्यं न सेव्यं स्वल्पं वा सेव्यं सुबहुवारिवा ।
अन्यथा शोफशैथिल्यदाहमोहान् करोतितत् ॥
नवमृद्भाजनस्थानि हृद्यानि सुरभीणि च ।
पानकानि समन्थानि सिताढ्यानि हिमानि च
स्वादु शीतं द्रवं चान्नं जांगलान्मृगपक्षिणः ।
शालिक्षीरघृतद्राक्षानालिकेरांबुशर्कराः ॥
तालवृन्तानिलान् हारान् स्रजः सकमलोत्पलाः
तन्वीर्मृणालवलयाः कान्ताश्चन्दनरूषिताः ॥
सरांसि वापीः सरितः काननानि हिमानि च ।
सुरभीणि निषेवेतवासांसि सुलघूनि च ॥
निष्पतद्यन्त्रसलिले स्वप्याद्धारागृहे दिवा ।
रात्रौ चाऽकाशतलके सुगन्धिकुसुमास्तृते ॥
कर्पूरचन्दनार्द्रांगोविरळानंगसंगमः ।

ग्रीष्मेत्यादिना ग्रीष्मस्वरूपलक्षणं दर्शयति । ग्रीष्मे तीक्ष्णांशुः सूर्यः अतसीपुष्पसन्निभःआनीलइव । दावोवनाग्निः । नैरृतोवायुः दक्षिणपश्चिमदिशोरन्तरः । तदा हि पवनादिभि र्जन्तवोज्वरिताइव भवन्ति । तथा नद्यस्तापार्तैस्त्वादिविशिष्टैर्मातंगादिभिः कलुषीकृताः, दिवाकरकराएवांगाराः तेषां निकरेण क्षपितमंभः यासां तास्तथोक्ताः, तथा प्रवृद्धानि रोधांसि तदानीं स्वल्पोदकत्वात्तास्तथा । महीरुहावृक्षाः च्छायाहीनत्वादिगुणयुक्ताः । यतः आदित्यः अतिशयेन तेजआदत्ते तेजः शुक्रान्तानां धातूनां स्नेहः । अतोव्यायामादींस्त्यजेत् । अन्यत्सुबोधम् । सुबहुवारि यस्मिन्मद्ये तत् तथोक्तम् । मन्थः प्रभूतोदकाः सक्तवः । तालवृन्तमुत्क्षेपकम् । निष्पतद्यन्त्रवाहि जलं यस्मिन् धारागृहे तत्तथोक्तम् । आकाशतलकं शरणपृष्ठम् ॥

वर्षासु वारुणोवायुः सर्वसस्यसमुद्गमः ॥
भिन्नेन्द्रनीलनीलाभ्रवृन्दमन्दाविलं नभः ।
दीर्घिकानववार्योघमग्नसोपानपंक्तयः ॥
वारिधाराभृशाघातविकासितसरोरुहाः ।
सरितः सागराकारा भूरव्यक्तजलस्थला ॥
मन्द्रस्तनितजीमूतशिखिदर्दुरनादिता ।
इन्द्रकोपधनुःखण्डविद्युदुद्योतदीपिता ॥
परितः श्यामलतृणा सिळीन्ध्रकुटजोज्वला ।
तदाऽदानाबले देहे मन्देऽग्नौ बाधिते पुनः ॥
वृष्टिभूबाष्पतोयाम्लपाकदुष्टैश्चलादिभिः ।
बस्तिकर्म निषेवेत कृतसंशोधनक्रमः ॥
पुराणशालिगोधूमयवान् यूषरसैः कृतैः ।
निगदंमदिरारिष्टमार्द्वीकं स्वल्पमंबु वा ॥
दिव्यं क्वथितकूपोत्थं चौण्डं सारसमेव वा ।
वृष्टिवाताकुलेत्वन्हि भोजनं क्लेदवातजित् ॥
परिशुष्कं लघुस्निग्धमुष्णाम्ललवणं भजेत् ।
प्रायोऽन्नपानं सक्षौद्रं संस्कृतं च घनोदये ॥

असरीसृपमूत्राष्पशीतमारुतशीकरम् ।
साग्नियानं च भवनं निर्दंशमशकोन्दुरम् ॥
प्रघर्षोद्वर्तनस्नानधूमगन्धागरुप्रियः ।
यायात् करेणुमुख्याभिश्चित्रस्रग्वस्त्रभूषितः ॥
नदीजलोदमन्थाहःस्वप्नातिद्रवमैथुनम् ।
तुषारपादचरणव्यायामार्ककरांस्त्यजेत् ॥

वर्षास्वित्यादिना तस्यैव स्वरूपलक्षणमुच्यते । तदा वरुणदिक्कोवायुः वहति सर्वसस्यानां समुद्गमहेतुः । तथा भिन्नेन्द्रनीलेन तुल्यनीलत्वैरभ्रवृन्दैर्मन्दमपटु आविलमाकुलं च नभोभवति । भेदे हीन्द्रनीलोऽतिशयनीलवान् भवति । नवेन वार्योघेन मग्नाः स्थगिताः सोपानपंक्तयोयासु दीर्घिकासु पुष्करिणीषु तास्तथोक्ताः । तथा ताएव मेघवारिधाराभिः योऽसौ भृशमत्यर्थं आघातस्तेन विकासितसरोरुहाः । नद्यश्च समुद्रसदृशाः । भूश्च बहुलजलप्लावितत्वात् अव्यक्तजलस्थला भूतपूर्वस्य जलस्य व्यक्तदेशो न ज्ञायतइत्यर्थः । तथा मन्द्रस्तनितामधुरशब्दाः ये जीमूतामेघाः शिखिनो मयूराः दर्दुरामण्डूकाः तैर्नादिता कृतशब्दा भूर्भवति । तथा इन्द्रगोपैर्भास्वरैः कृमिविशेषैः धनुःखण्डेन चैन्द्रेण विद्युद्भिश्च यउद्योतः प्रकाशः तेन दीपिता प्रकटा भूर्भवति । तथा परितः समन्तात् श्यामळानि तृणानि यस्याः सा तथोक्ता। तथा सिलिन्ध्रैः कुटजैश्च पुष्पविशेषैरुज्वला । तदा वर्षास्वादानत्वादबलत्वेनाभिमान्द्यम् । पुनश्च वृष्ट्यादिदुष्टैर्वातादिभिरत्यर्थं बाधितेऽग्नौ तदुपकाराय वास्तिकर्मादिकं निषेवेत। किंभूतइत्याह कृतसंशोधनक्रमः यथोक्तौ वमनविरेकौ कृतौ येन स तथोक्तः । कृतायूषादयः स्नेहशुण्ठ्यादियुक्ताः । दिव्यांबु क्वथितं पिबेत्, चौण्ड्यं यत् पर्वते शिलाकूपिकाभवम्। वृष्ट्या वातेन चाऽकुले वृष्टिवातभूयिष्ठे । संस्कृतं कालयोग्यैर्द्रव्यैः । सरीसृपास्सर्पवृश्चिकादयः ॥

शरदि व्योम शुभ्राभ्रं किञ्चित्पंकांकिता मही
प्रकाशकाशसप्ताह्वकुमुदा शालिशालिनी ॥
विक्षिप्ततीक्ष्णकिरणो मेघौघविगमाद्रविः ।
बभ्रुवर्णोऽतिविमलाः क्रौञ्चमालाकुलादिशः ॥
कमलान्तरसंलीनमीनहंसांसघट्टनैः ।
तरंगभंगतुंगानि सरांसि विमलानि च ॥
वर्षाशीतोचितांगानां सहसैवार्करश्मिभिः ।
तप्तानां सञ्चितं पूर्वं तदा पित्तं प्रकुप्यति ॥
शस्तं तिक्तहविःपानं विरेकोऽस्रस्रुतिः सदा ।
शीतं लघ्वन्नपानं च कषायस्वादुतिक्तकम् ॥
शालिषष्टिकगोधूमयवमुद्गसितामधु ।
पटोलामलकं द्राक्षा जांगलं क्षुद्रतां भृशम् ॥
दिवा दिवाकरकरैर्निशाकरकरैर्निशि ।
सन्तप्तं ह्लादितं तोयमगस्त्येनाविषक्तिकम् ॥
निर्मलं शुचि कालेन पक्वं पानेऽमृतोपमम् ।
हंसौघपक्षविक्षेपभ्रमत् भ्रमरपंक्तिषु ॥
सुसरोरुहसेव्यासु सरसीषु प्लवेत च ।
लघुशुद्धांबरस्रग्वी शीतोशीरविलेपनः ॥
सेवेत चन्द्रकिरणान् प्रदोषे सौधमाश्रितः ।
तृप्तिदध्यातपक्षारवसातैलपुरोनिलान् ॥
तीक्ष्णमद्यादिवास्वप्नतुषारांश्च विवर्जयेत् ।

शरदि व्योमेत्यादिना शरत्स्वरूपं वर्णयति । प्रकाशाः काशाःसप्ताह्वपुष्पं कुमुदानि च यस्यां भुवि सा तथोक्ता । तथा मेघौघविगमाद्धेतोः रविर्विक्षिप्ततीक्ष्णकिरणोबभ्रवर्णश्च भवति, बभ्रुः कपिलः । तथा कमलानामन्तरे ये संलीना मीना हंसाश्च तेषां संघट्टनैर्ये तरंगभंगाः तैस्तुंगान्युन्नतानि यानि सरांसि तानि तथोक्तानि । वर्षास्वम्लविपाकजलमद्यादिभिः पित्तं सञ्चितं कालस्य शैत्यादिकुपितमादित्यकिरणसन्तापेन शरदि कुप्यति । अतस्तिक्तघृतपानादिकं पित्तजयाय सेवेत, तिक्तं नाम घृतं वक्ष्यते, अन्ये तु महातिक्तपञ्चतिक्तादि सर्वं तिक्तद्रव्यसिद्धमिच्छन्ति । अन्यत् सुबोधम् ॥

नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥

नित्यं सर्वेष्वृतुषु सर्वरसाभ्यासः । ये च रसायस्मिन्नृतौ उक्ताः तत्राऽधिक्येन सेव्याइति ॥

ऋत्वोरन्तादिसप्ताहावृतुसन्धिरिति स्मृतः ।

गच्छतऋतोरन्तसप्ताहआगच्छतऋतोरादिसप्ताहः इति दिवसाश्चतुर्दश ऋतुसन्धिशब्दवाच्याः ॥

तत्र पूर्वोविधिस्त्याज्यः सेवनीयोपरः क्रमात्

**असात्म्यजाहि रोगाः स्युः सहसा त्यागशी-**
**[लनात्**

तस्मिंश्च ऋतुसन्धौ गच्छतस्तु विधिः क्रमेण त्याज्यः । तथैव क्रमेण वर्तमानस्य विधिः सेव्यः सेवनीयः । क्रमश्च पादेनापथ्यमभ्यस्तमित्यादिना वक्ष्यते । अन्यथा झटिति विधित्यागोपादाने कुर्वतोऽसात्म्यत्वाद्रोगोत्पत्तिः ॥

**ऋतुष्वेवंविधेष्वेव विधिः स्वास्थ्ये च देहिनां ॥**
**निर्दिश्यतेऽन्यरूपेषु विरुद्धज्ञानिकोविधिः ।**

एवंविधेष्वृतुषु यथोक्तकालस्वरूपलक्षणेष्वेवायं यथोक्तविधिः । अनेन च विधिना एवंविधेष्वेव स्वास्थ्यम् । अन्यरूपेषु तु विरुद्धविज्ञानप्रसंगे निर्देक्ष्यते ॥

**मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयम् ॥**
**यथोत्तरं भजेच्चर्यां तत्र तस्य बलादिति ।**

अस्य च ऋतोर्मासादिस्वरूपेण यल्लक्षणत्रयं प्रसिद्धं तत्र यथोत्तरं चर्यां सेवेत यथोत्तरस्यैव बलवत्वात् । तेनैतदुक्तं भवति ग्रैष्मस्यर्तोर्विधिरुक्तः स तन्मासप्रारंभएव सति राशिस्वरूपाभ्यां रहितस्य स्वल्पं योज्यः । अथचेत् कदाचिद्राशिरपि प्राप्तः न तु यथोक्तस्वलक्षणस्तत्र स एव विधिः किञ्चिन् परिपूरणीयः । यत्र तु मासे राशिःस्वरूपलक्षणं च परिपूर्णं तत्र विधिरपि परिपूर्णएव । तथा यत्रापि मासेन विना राशिः प्राप्तः न तु स्वरूपलक्षणं तत्र मध्योविधिः । मासस्वरूपलक्षणयोरन्तरत्वाद्राशेर्बलवत्वम् । यत्र मासराशिभ्यां विनैव पूर्णं स्वरूपलक्षणं तत्र पूर्णोविधिः । स्वरूपलक्षणस्य सर्वबलवत्वादिति ॥

इतीन्दुविरचितायामष्टांगसंग्रहव्याख्यायां
सूत्रस्थाने चतुर्थोऽध्यायः.

---

## पञ्चमोऽध्यायः

**अथातोरोगानुत्पादनीयं नामाध्यायं व्याख्यास्यामः । इतिहस्माऽहुरात्रेयादयोमहर्षयः**

स्वस्थवृत्तं प्रकृतम् । वेगधारणशीलस्य च स्वास्थ्यासंभवः । अतोवेगधारणप्रतिषेधेन च रोगानुत्पत्तिः । तामधिकृत्याध्यायआरभ्यते अथातइत्यादि ॥

**वेगान् न धारयेद्वाताविण्मूत्रक्षवतृट्क्षुधाम् ।**
**निद्राकासश्रमश्वासजृंभाश्रुच्छर्दिरेसताम् ॥**

वेगानां प्राप्तानामप्रतिषेधाद्रोगानुत्पत्तिरुच्यते वेगानित्यादि । वातादीनां प्राप्तउत्सर्गो न प्रतिषेद्धव्यः । वातादि.मेणैवोद्देशवान्निर्देशः ।

ऊर्ध्वाधोभेदेन द्विविधोवातः । तत्र मूत्रपुरीषसमानयोगक्षेमत्वादधोवातः प्रथममुच्यते ॥

**अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्रमाः ।**
**वातमूत्रशकृत्संगदृष्ट्यग्निवधहृत्गदाः ॥**

अधोवातस्य गुदवातस्य रोधेन गुल्माद्युत्पत्तिः । उदावर्तअर्शोनिदाने वक्ष्यते । तथा रुग्भवति क्रमश्च । पुनश्च वातादीनामप्रवृत्तिः । दृष्टेरग्नेश्च नाशः ॥

**शकृतः पिण्डिकोद्वेष्टप्रतिश्यायशिरोरुजः ।**
**ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम् ॥**
**मुखेन विड्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः ।**

शकृतः पुरीषस्य रोधेन पिण्डिकोद्वेष्टादयः । उद्वेष्टनमिवोद्वेष्टः, पिण्डिकयोरुद्वेष्टः पिण्डिकोद्वेष्टः । पिण्डिकेति जंघाकाण्डस्य पश्चिमे भागे पिण्डाकृति कठिनं मांसम् । तत्र उद्वेष्टनेनेव रुग्भवतीत्यर्थः । सर्वे चेहोक्तारोगावक्ष्यमाणलक्षणाः विशा च मार्गस्य निरोधात् प्रतिहतनिवृत्तस्य वायोरूर्ध्वं प्रवृत्तिः । जठरे समन्तात् च्छेदमिव परिकर्तनम् । हृदयस्य च बन्धः । पूर्वोक्तावातरोधरोगाश्च ॥

**अंगभंगाश्मरीवस्तिमेढ्रवंक्षणवेदनाः ॥**
**मूत्रस्य रोधात् पूर्वे च प्रायोरोगाः—**

मूत्रस्य रोधादंगभंगादयः । भंगइव स्फोटनमिव भंगोंऽगभंगः । वस्त्यादीनां वेदनयासंबन्धः । पूर्वे च वातशकृद्रोधोक्तारोगाश्च ॥

**—तदौषधम् ।**
**वर्त्यभ्यंगावगाहाश्च स्वेदनं वास्तिकर्म च ॥**
**अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ॥**
**मूत्रजेषु तु पाने च प्राग्भक्तं शस्यते घृतम् ।**
**जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम् ॥**
**अवपीडकमेतच्च संज्ञितं—**

तेषां वातादिरोधजातानां रोगाणां फलवर्त्यादि सामान्यमौषधम् । वर्तिः तीक्ष्णद्रव्यकृता गुदप्रणिधेया। अवगाहोवातहरद्रव्यसाधिते द्रवे द्रोणीस्थिते मग्नदेहस्यावस्थानम् । वस्तिकर्म मलप्रवृत्तये निरूहयोजना वक्ष्यमाणा। विडोधोत्थेषु विड्भेद्यन्नपानं विशेषेण । मूत्ररोधजेषु तु विशेषेण भोजनपूर्वं घृतपानं जीर्णान्तिकञ्च घृतं प्रशस्यते। जीर्णान्तिकं यत् भुक्तेऽन्ने जीर्णे युज्यते उत्तमया मात्रया अहोरात्रजरणलक्षणया इति प्राग्भक्तस्नेहयोजना जीर्णान्तिकस्नेहयोजना च । उभयमवपीडकमुच्यते । तेन प्रदेशेष्ववपीडकशब्देन इदं योजनाद्वयं विज्ञेयम् ॥

—धारणात् पुनः ॥

उद्गारस्यारुचिः कंपोविबन्धोहृदयोरसोः ।
आध्मानकासहिध्माश्च हिध्मावत्तत्रभेषजम् ॥

पुनःशब्दः सामान्यनिर्दिष्टवातप्रकारोक्तशिष्टोद्गारस्यवातपरामर्शाय । उद्गारस्य पुनर्धारणादरुच्यादयः । उरोवक्षः, हृदयं तस्याधस्तयोर्विबन्धः अन्तःस्तंभइव । वायुना कुपितेन नाभेरधः सशूलमापूरआध्मानः । एतेषु रोगेषु चिकित्सितस्थाने वक्ष्यमाणा हिध्माचिकित्सा कार्या ॥

शिरोर्तीन्द्रियदौर्बल्यमन्यास्तंभार्दितं क्षुतेः ।
तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः ॥
प्रवर्त्तयेत् क्षुतिं सक्तां स्वेदाभ्यंगौ च शीलयेत्
योज्यं वातघ्नमन्नं च घृतश्चौत्तरभक्तिकम् ॥

क्षुतेः क्षवथोः रोधात् शिरोर्त्यादिरोगोत्पत्तिः । इन्द्रियाणां दर्शनादीनामशक्तत्वं स्वविषयग्रहणेदौर्बल्यम् । अत्र तीक्ष्णधूमादिभिः सक्तामप्रवर्तमानां क्षुतिं प्रवर्तयेत् तीक्ष्णोधूमोवक्ष्यमाणलक्षणः । तीक्ष्णाघ्राणं नासया मरिचादिग्रहणम् । औत्तरभक्तिकं भोजनस्य पश्चात् तत्कालिकमेव घृतं योज्यम् ॥

शोषांगसादबाधिर्यसम्मोहभ्रमहृत्गदाः ।
तृष्णाया निग्रहात्तत्र शीतस्सर्वो विधिर्हितः ॥

तृष्णायानिग्रहाद्रोधात् शोषाद्युद्रवः । बाधिर्यमश्रुतिः । मोहएव सम्मोहः । तत्र तृड्रोधे सर्वोविधिः स्नानान्नपानादिकः शीतः कार्यः ॥

अंगभंगारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ।
तत्र योज्यंलघु स्निग्धमुष्णमल्पञ्च भोजनम् ॥

क्षुधोवेगरोधादंगभंगाद्युत्पत्तिः । तत्र च लघु शाल्यादि स्निग्धमुष्णमल्पञ्च भोजनं विधेयम् ॥

निद्रायामोहमूर्धाक्षिगौरवालस्यजृंभिकाः।
अंगमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च ॥

निद्रावेगधारणान्मोहशिरोगौरवादयः । तत्र स्वप्नः संवाहनानि च योज्यानि । संवाहनं स्वल्पमर्दनम् ॥

कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ।
शोषोहिध्मा च कार्योऽत्र कासहा सुतरां विधिः।

कासस्य वेगरोधात् कासवृध्याद्युत्पत्तिः तत्र कासचिकित्सितविहितोविधिः कार्यः ॥

गुल्महृद्रोगसंमोहाः श्रमश्वासाद्विधारितात् ॥
हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ।

अध्वव्यायामादिसाहसेन सद्यउत्पन्नः श्वासः श्रमश्वासः, तद्वेगरोधात् गुल्माद्युत्पत्तिः । तत्र विश्रमणं, वातघ्नी च क्रिया हिता ॥

जृंभायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः॥

जृंभावेगरोधात् क्षुतिवद्रोगोत्पत्तिः । तत्र वातघ्नी क्रिया हिता । जृंभा समुखविकासो गात्रविनामः ॥

पीनसाक्षिशिरोहृद्रुङ्मन्यास्तंभारुचिभ्रमाः ।
सगुल्माबाष्पतस्तत्र स्वप्नोमद्यं प्रियाः कथाः ॥

बाष्पस्याश्रुणोवेगरोधात् पीनसाद्युत्पत्तिः । पीनसोनासास्रावः । अक्ष्यादीनां रुजया संबन्धः । तत्र स्वप्नादिका चिकित्सा ॥

विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ।
सकासश्वासहृल्लासव्यंगश्वयथवोवमेः ॥
गण्डूषधूमानाहारं रूक्षं भुक्त्वा तदुद्वमः ।
व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम्
सक्षारलवणं तैलमभ्यंगार्थे च शस्यते ॥

वमेः च्छर्दिषः वेगधारणाद्विसर्पाद्युत्पत्तिः । कोठः श्यावानि मण्डलानि । तत्र गण्डूषादिका चिकित्सा रूक्षं चान्नं भुक्त्वा उद्वमेत् । स्निग्धस्य कफोत्क्लेशकरत्वात् ।

एतावता हि प्राणोवायुः स्वमार्गं गृह्णाति । क्षारलवणाभ्यां युक्तं तैलमभ्यंगे च योजयेत् ॥

**शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुज्वराः ।**
**हृद्व्यथा मूत्रसंगांगभंगवृध्म्यश्मपण्डताः ॥**
**ताम्रचूडसुराशालिवस्त्यभ्यंगावगाहनम् ।**
**बस्तिशुद्धिकरैः सिद्धं भजेत् क्षीरं प्रियाः स्त्रियः**
**तत्र सेवेत—**

शुक्रवेगरोधात् शुक्रस्रावाद्युत्पत्तिः । षण्डता स्त्रीगमनाशक्तता । तत्र च ताम्रचूडादिका चिकित्सा । ताम्रचूडः कुक्कुटः । बस्तिशुद्धिकरैः त्रपुसप्रभृतिभिः सिद्धं क्षीरं भजेत् । प्रियाश्च युवतीः ॥

**—सर्वं च वर्जयेद्वेगधारिणम् ।**
**विड्वामिनं परिक्लिष्टं क्षीणं तृच्छूलपीडितम्**

न च सर्वस्मिन् वेगरोधिनि चिकित्सा कार्या ॥

**रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ।**

वेगधारणे दोषानुक्त्वा उदीरणे रोगानाह रोगाइत्यादि । यद्येवं धारणग्रहणं न कर्तव्यं उदीरणेन सर्वरोगोत्पत्तेः उदीरणेनापि धारणे निर्दिष्टानामेव रोगाणामुत्पत्तिः प्रसज्यते तन्निवृत्यर्थं धारणग्रहणम् ॥

**निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥**
**ततश्चानेकधा प्रायः पवनोयत् प्रकुप्यति ।**
**अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम् ॥**

यदि धारणोदीरणाभ्यां सर्वे रोगाः प्रजायन्ते अतो-वातादिरोधेन गुल्मादिवचनमनर्थकरमित्याह निर्दिष्टमित्यादि । तत्र तयोर्वेगधारणोदीरणयोर्मध्ये वेगधारणाच्चिरकालभाविनः सप्रत्ययायारोगाभवन्ति । उदीरणात्त तथा । तेन भूयिष्ठं ये संभवन्ति तान् प्रति चिकित्सितं निर्दिष्टमित्यर्थः। अस्माद्वेगधारणादितरेभ्यः पवनएव कुप्यति यत्तस्मादनुलोमनमस्य हितम् ॥

**क्रमादपामपि मणौ पंकोऽवश्यं भवत्यतः ।**
**उत्तिष्ठेत यथाकालं मलानां शोधनं प्रति ॥**

एवं स्वास्थ्यसंवाहनरोगोत्पत्तिरक्षणप्रसंगेनेदमभ्युच्यते क्रमादित्यादि । यथा निर्मलेऽपि मणावलिञ्जरे स्थितानां स्वभावनिर्मलानामप्यपां क्रमात् कालपरिवासात् पंकोऽवश्यं भवति तथा ऋतुचर्याया अनुष्ठातुरपि देहे दोषसञ्चयः । अतोहेतोर्यथाकालं उक्तशोधनकालानतिक्रमेण मलानान्दोषणां शोधनं प्रति सेवार्थमुत्तिष्ठेत चेष्टेत ॥

**चयकाष्ठामुपारुह्य कुर्वते ते ह्युपेक्षिताः ।**
**प्रायशः सुचिरेणापि भेषजद्वेषिणोगदान् ॥**
**अतिस्थौल्याग्निसदनमेहकुष्ठहृतौजसः ।**
**स्रोतोरोधाक्षविभ्रंशश्वासश्वयथुपाण्डुताः ॥**
**आमोरुस्तंभजठरकृच्छ्रालसकदण्डकान् ।**
**च्छर्दिगण्डकृमिग्रन्थितन्द्राःदुस्स्वप्नदर्शनम् ॥**
**कण्ठामयान् मूर्द्धरुजं प्रणाशं बुद्धिनिद्रयोः ।**
**तेजोवर्णबलानां च तृष्यतोबृंहणैरपि ॥**
**उचितैरपि चाऽहारैर्यस्मादस्य वहन्ति न।**
**दोषोपलिप्तवदनारसंरसवहाः सिराः ॥**
**वमनादीनतोयुञ्ज्यात् स्वस्थस्यैव यथाविधि ।**
**दोषाः कदाचित् कुप्यन्ति जितालंघनपाचनैः**
**ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ।**
**यथाक्रमं यथायोगमतऊर्ध्वं प्रयोजयेत् ॥**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित्**

हि यस्मात् भेषजं वमनादि ये द्विषन्ति न सेवन्ते तेषां दोषाश्चयावस्थामुपरूढा उपेक्षिताश्च सुचिरेणापि रोगान् कुर्वते यथासंभवमतिस्थौल्यादीन् । हृतौजश्शब्दः पुल्लिंगः सन्निपातज्वरपर्यायः ।"सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम्" , अक्षविभ्रंश इन्द्रियविनाशः । अलसकदण्डकौ वक्ष्यमाणलक्षणौ । तृप्तिरभुक्तेऽपि भुक्ताभिमानिता । प्रमीलकं स्तैमित्यम् ।अम्लपित्तस्यापरनामेऽत्यन्ये पठन्ति। यथा "पच्यमानं विदाह्यन्नं रक्तादीन् कोपयेद्यदा । पित्तं च कोपयेदाशु कफस्थानानिलेरितम् । तदा भवति हृच्छूलमुखवैरस्यसादनम् । लवणं तिक्तमम्लं च सततं च्छर्दयत्यपि ।

---

*पायुमेहनमुष्केषु शूलं शोषोहृदि व्यथा ।
तेषु तेषु विकारेषु यथास्वं च चिकित्सितम् ॥
इति मूलग्रन्थेऽधिकः पाठः । व्याख्या न दृश्यते ।

शाहोऽतिनिद्रा विट्संगोवैवर्ण्यं कार्श्यमेव च । अरोचकोऽक्लुकिता प्रसेकः श्लेष्मणस्तथा । स्युर्यत्रैतानि लिंगानि निर्दिशेत् तत् प्रमीलकम् । ।पर्यायादम्लपित्तं च तथा पित्तविषूचिके"ति । उचितैः सात्म्यैर्बृंहणैरपि चाऽऽहारैः तृप्तिं यात स्तेजसोवर्णस्य बलस्य च नाशः । यस्मात् दोषोपलिप्तमुखारसवहाः सिरा रसं न वहन्ति । तदर्थं वमनादीनुपक्रमान् योजयेत् स्वस्थस्यैव । न तु रोगविशेषान्तरत्वेन । अन्यत्सुबोधम् ॥

भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ॥
शालिषष्टिकगोधूममांसक्षीरघृतादिभिः ।
हृद्यदीपनभैषज्य संयोगाद्रुचिपक्तिदैः ॥
साभ्यंगोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ।
तथा स लभते शर्म सर्वगावकपाटवम् ॥
धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः ।

बहुशोभेषजप्रयोगात् क्षपिते शरीरे आहारैरेव बृंहणं क्रमात् स्वल्पं स्वल्पं पुष्टिकरं सर्वं पथ्यम् । किंभूतैराहारैः शाल्यादिभिर्हृद्येन दपिनेन चौषधेन संयोगाद्रुचिप्रदैरग्निबलप्रदैश्च । सर्वपावकानां जाठरस्य धात्वग्नीनां च पटुत्वम् ॥

ये भूतविषवाय्वग्निक्षतभंगादिसंभवाः ॥
कामक्रोधभयाद्याश्च ते स्युरागन्तवोगदाः ।

निजरोगोत्पत्तिकारणपरिहारप्रसंगेनाऽऽगन्तवं रोगास्तत्परिहाराश्चोच्यन्ते । ये भूतेत्यादि । भूतादिसंभवारोगारागादयश्चाऽऽगन्तवोव्याधयः । आगन्तुत्वं वक्ष्यमाणलक्षणम् ॥

त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ॥
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ।
अथर्वविहिताशान्तिः प्रतिकूलग्रहार्चनम् ॥
भूताद्यस्पर्शनोपायोनिर्दिष्टश्च पृथक् पृथक् ।
अनुत्पत्यै समासेन विधिरेषः प्रदर्शितः ॥
निजागन्तुविकाराणामुत्पन्नानां च शान्तये ।

तेषामागन्तूनामनुत्पत्यै विधिः प्रज्ञापराधत्यागादिः । प्रज्ञापराधो दिनचर्याद्युक्तविध्यतिक्रमः । देशादिविज्ञानेन विषयस्थं मनः स्पष्टतां याति । एवमभिजनोऽहं । तत्र चेदमुचितमिदमनुचितम् । एवमहमर्थवानेवमहं शूरः । इदमस्मिन् देशे काले चोचितमिदं नेति बहुविधं परिकल्पनं देशकालात्मविज्ञानम् । भूतग्रहादीनामस्पर्शने यउपायो भूतविद्यायां निर्दिष्टः । तथाच तेषु भूतेषु केचित् स्पृशन्तोऽधितिष्ठन्ति केचिज्जिघृक्षन्तइत्येवमाद्युक्तमिति । द्विविधोरोगोत्पत्यभावाय उत्पन्नानाञ्च रोगाणां नाशाय विधिः प्रदर्शितः।

शीतोद्भवं दोषचयं वसन्ते
विशोधयन् ग्रीष्मजमभ्रकाले ।
घनात्यये वार्षिकमाशु सम्यक्
प्राप्नोति रोगानृतुजान् न जातु ॥

दोषाणां हि शोधनमुक्तम् तस्य तु कालउच्यते शीतोद्भवमित्यादि ।इति साधारणेषु कालेषु दोषानातिवाहयन् ऋतुजान् रोगान् न कदाचित् प्राप्नोति । अतिशीतादिकालेषु अयोगादिशंका ॥

नित्यं हिताहारविहारसेवी
समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावा-
नाप्तोपसेवी च भवत्यरोगः ॥

नित्यं हिताहारेत्यादि सुबोधम् ॥

अर्थेष्वलभ्येष्वकृतप्रयत्नं
कृतादरं नित्यमुपायवत्सु ।
जितेन्द्रियं नानुपतन्ति रोगा-
स्तत्कालयुक्तं यदि नास्ति दैवम् ॥

तथा यः पुरुषार्थेष्वलभ्येषु अपरिच्छिन्नलाभेषु वस्तुषु अनारब्धयत्नः उपा ःशक्यमानेषु कृतप्रयत्नः जितेन्द्रियश्च तं रोगानानुपतन्ति तत्कालयुक्ताद्विना दैवात् । दैवे पूर्वकृते कर्मणि दुष्टे तत्कालं फलवत्यवश्यमेव रोगोत्पत्तिः ॥

कालोऽनुकूलोविषयामनोज्ञा
धर्म्याः क्रियाः कर्म सुखानुबन्धि ।
सत्वं विधेयं विशदा च बुद्धि-
र्भवन्ति धीरस्य सदा सुखाय ॥

कालोऽनुकूलः हीनातिमिथ्यायोगवर्जितः अर्थलाभादिफलप्रदश्च । विषयाः शब्दादयः मनोज्ञाः प्रियाः । क्रि-

याश्च धर्मप्रधानाः । कर्म चोभयलोकसुखानुबन्धि । सत्वं मनः । विधेयमपरवशम् । विशदा निर्मला बुद्धिः । एतानि धैर्ययुक्तस्य सुखाय कल्पन्ते ॥

इतीन्दुविरचितायामष्टांगसंग्रहव्याख्यायां
सूत्रस्थाने पञ्चमोऽध्यायः.

## षष्ठोऽध्यायः

**अथातोद्रवद्रव्यविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इतिहस्माऽहुरात्रेयादयोमहर्षयः॥**

स्वस्थहितप्रसंगेनान्नपानमुच्यते । तत्रान्नपानानां संस्काराद्युपयोगो द्रवे तोयादिके संभवति अतः प्रथमं तोयादीन्युच्यन्ते अथातइत्यादि ॥

**जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम् ।**
**तन्वव्यक्तरसं मृष्टं शीतं शुच्यमृतोपमम् ॥**
**सूर्योद्धृतमयुक्तत्वाल्लघु वातकफापहम् ।**
**शैत्यजीवनसौम्यत्वैः पित्तरक्तविषार्तिजित् ॥**
**गंगांबु नभसोभ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः ।**
**हिताहितत्वे तद् भूयोदेशकालावपेक्षते ॥**

जलस्य च प्राधान्यादग्रे ग्रहणम् । अत आह जीवनमित्यादि । गंगांबु जीवनत्वादिगुणयुक्तम् । जीवनं सौम्यधातुवृद्धिकरम् । ओजोवृद्धिकरमत्यन्ये । तर्पणं तृप्तिकृत्। हृदयस्य प्रियं हृद्यम् । ह्लादि आह्लादकरम् । बुद्धेः प्रबोधनं पटुत्वकरम् । तनु स्वच्छम् । अव्यक्तरसं माधुर्यादिना अविविक्तम् । मृष्टं स्वादुत्वादिगुणयुक्तम् । शीतं वीर्येण । अन्यातपाद्यतप्तं अन्योदकेभ्यः स्वभावेन शीततरम्। शुचि पवित्रम् । अमृतोपमं प्राणसन्धारकत्वात् । सूर्येण रविणोद्धृत्य यतोमुक्तमतः क्रियायोगादागतलाघवं च । वातश्लेष्मघ्नं च अन्यपानीयापेक्षया । शीतत्वादिना च पित्तादिविनाशनम् । किंभूतं गंगांबु नभसोऽन्तरीक्षात् भ्रष्टं पतितम्। तथा रविचन्द्रवायुभिः पतदेव स्पृष्टम् । एवं स्वरूपमपि गंगांबु पथ्यत्वे अपथ्यत्वे च देशं कालं चापेक्षते । एवं विधे देशे च यतः पतितमत एवं गुणम् एवं कलेऽपि। देशकालौ च गुणविशेषेण वक्ष्यमाणलक्षणौ ॥

**येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम् ।**
**अक्लिन्नमविवर्णं वा तत्पेयं गांगमन्यथा ॥**
**सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना ।**

येनांबुनाऽभिवृष्टं सिक्तममलं निर्मलं शाल्यन्नमक्लिन्नमविवर्णं वा भवति तदंबु गांगत्वात् पेयम् । वेति समुच्चये । एतद्विपर्ययेण सामुद्रम् । तच्चाऽश्वयुजं मासं वर्जयित्वाऽन्यस्मिन् मासि न पेयम् ॥

**खातधौतशिलापृष्ठवस्त्रादिभ्यश्च्युतं जलम् ॥**
**हेममृन्मयपात्रस्थमविपन्नं सदा पिबेत् ।**

एतच्चाभिवृष्टं प्रथमं खातादिनोपायेन गृह्यते । खातात् गृहीतम् । धौताशिलापृष्ठात् गृहीतम् । धौतवस्त्रादिभ्यो वा च्युतम् । हैमे सौवर्णे मृन्मये वा पात्रेऽवस्थितमविकृतम् । तत्सदा पिबेत् । खातोजलग्रहणार्था भूकुण्डिका॥

**तदभावे च भूमिष्ठमान्तरिक्षानुकारि यत् ॥**

तदभावे भूमिष्ठं पेयम् । यत् गुणैः स्वच्छत्वादिभिरान्तरिक्षमनुकरोति तत् सदृशं गुणैरित्यर्थः ।

**श्वेते कषायं तत्स्वादु कृष्णे तिक्तं च पाण्डुरे ।**
**नीले कषायमधुरं देशे लवणमूषरे ॥**
**सक्षारं कपिले मिश्रं मिश्रेथांबुगुणाधिके ।**
**मधुरं लवणाम्लं तु भवेत्भूमिगुणाधिके ॥**
**तेजोधिके तिक्तकटु कषायं पवनाधिके ।**
**दिव्यानुकारित्वव्यक्तरसत्वात् खगुणाधिके ॥**
**शुचिपृथ्वसितश्वेते देशे चार्कानिलाहतम् ।**

भूमिष्ठमुक्तं तस्यैव विशेषउच्यते देशविशेषेण । श्वेते मृदि प्रदेशे स्थितमुदकं कषायरसतां याति । एवं कृष्णे मधुरताम् । पाण्डुरे तिक्तताम् । नीले कषायमधुरताम् । ऊषरे च लावण्यम् । ऊषरोयोदग्धमृदिव प्रदेशः स ऊषरः स्यात् "ऊषरः क्षारमृत्तिका" । कपिले सक्षारमुदकं भवति । सक्षारं क्षारत्वगुणयुक्तं क्षारोनाम रसविशेषः । क्षारो-सौम्यः कठिनभाववैपरीत्यकृत् । मिश्रलक्षणे मिश्रगुणः । सर्वश्च भूप्रदेशः पञ्चभूतात्मकः न सर्वत्र भूतसाम्यं भवति । अतउच्यते आप्यभागाधिके देशे मधुर-

मुदकं भवति । पार्थिवगुणाधिके लवणाम्लम् । तैजोभागाधिके तिक्तकटुकम् । वायुभागाधिके कषायम् । आकाशगुणाधिके चाव्यक्तरसत्वादान्तरिक्षसमगुणम् । भूताधिक्यं च विशिष्टमनेनैव मधुरत्वादिना ज्ञायते । गुणशब्दश्च भागपर्यायः । संख्यायागुणस्यसमानित्यादिना विभागो गुणइति च । यथा । अव्यक्तरसत्वम् । मूर्तमहाभूतस्वल्पत्वादिदमपि दिव्यसदृशं शुची विस्तीर्णे कृष्णे श्वेतमृदि च स्थितं अर्केण वायुना चाऽहृतम् ॥

**कौपसारसताटाकचौण्डप्रास्रवणौद्भिदम् ॥**
**वापीनदीतोयमिति तत् पुनः स्मृतमष्टधा ।**

तत् भूमिष्ठं अष्टधा अष्टभिः प्रकारैः स्मृतं कौपत्वादिभिः । कूपे भवं कौपम् । सरसि भवं सारसम् । तथा ताटाकम् । चौण्डं पर्वतादौ पाषाणनिम्नस्थितम् । ताटाकश्चान्तरिक्षात् पतित्वा भूमौ स्थितम् । प्रास्रवणं पर्वतात् स्रुतम् । औद्भिदं भूमावुद्भिद्य तत्रैव तिष्ठति । वापी कूपवत् सर्वतः कृतसोपानपंक्तिः । नदी प्रसिद्धा एतेषां क्रमेण गुणनिदर्शनम् ॥

**सक्षारं पित्तकृत् कौपं दीपनाग्न्यातिवातळम् ॥**
**सारसं स्वादु लघु च ताटाकं गुरु वातळम् ।**
**चौण्डं तु पित्तळं दोषहरं प्रास्रवणोदकम् ॥**
**औद्भिदं स्वादु पित्तघ्नं स्वादु वापीजलं लघु ।**
**नादेयं वातळं रूक्षं कटुकं च तदादिशेत् ॥**
**धन्वानूपमहीध्राणां सामीप्यात् गुरुलाघवम् ।**

कौपं क्षारगुणयुक्तं पित्तळम् । अग्निदीपनं अल्पवातळं च सारसम् । मधुरं लघु च। ताटाकं गुरु वातकरं च। चौण्डं पित्तळम् । प्रास्रवणं त्रिदोषहरम् । औद्भिदं मधुरं पित्तघ्नम् । वापीजलं मधुरं लघु च । सामान्येन वातळं रूक्षं कटुकञ्च नादेयम् । कौपादीनाञ्च सप्तानां धन्वादिसामीप्यात् गुरुत्वं लघुत्वञ्च विज्ञेयम । तेनैतदुक्तं भवति आनूप यथोक्तलक्षणे स्थिताः कूपादयोगुरवः । धन्वनि जांगले देशे स्थिता आनूपेभ्योलघवोबहूदकसंबन्धाभावात् । तेभ्यो जांगलेभ्यः पर्वतस्थानां कूपादीनामतिलघुत्वं उदकानामत्यन्ताभावादित्यत्र चोत्सर्गापवादोपबृंहकवचनकल्पना च स्वबुध्या योज्या ॥

**पश्चिमोदधिगाः शीघ्रवहायाश्चामलोदकाः ॥**
**पथ्याः समासात्तानद्योविपरीतास्ततोऽन्यथा ।**
**उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥**
**हिमवन्मलयोत्भूताः पथ्यास्ता एव च स्थिताः**
**क्रिमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते ॥**

नद्य उच्यन्ते । समासात्संक्षेपतः इदमुच्यते । पश्चिमसमुद्रगाः शीघ्रवाहिन्योनिर्मलपानीयाश्च नद्यः पथ्याः । एतद्विपरीतलक्षणाविपरीताअपथ्याः । हिमवदुत्भूतामलयोत्भूताश्च पाषाणक्षुण्णाः पथ्याः । स्थितास्ताएवापथ्याः क्रिमिश्लीपदादिकराश्च ॥

**प्राच्यावन्त्यपरान्तोत्थादुर्नामानि महेन्द्रजाः ।**
**प्रदरश्लीपदातंकान् सह्यविन्ध्यभवाः पुनः ॥**
**कुष्ठपाण्डुशिरोरोगान् दोषघ्न्यः पारियात्रजाः**
**बलपौरुषकारिण्यस्सागराम्भस्त्रिदोषकृत् ॥**

प्राच्यादिजातादुर्नामानि कुर्वते । प्राच्यागौडाः । अवन्तयोमाळवाः । अपरान्ताः कोंकणाः । महेन्द्रजाउदरादिकं कुर्वते । सह्याद्विन्ध्याच्च जाताः कुष्ठादिकं कुर्वते । पारियात्रजास्त्रिदोषहराः बल्याः पौरुषकारिण्यः । पौरुषं वृषत्वम् । समुद्रजलं त्रिदोषकरम् ॥

**कीटाहिमूत्रविट्कोथतृणजालोत्करात्रिलम् ।**
**पंकपंकजशैवालहठपर्णादिसंस्तृतम् ॥**
**सूर्येन्दुपवनादृष्टं जुष्टं च क्षुद्रजन्तुभिः ।**
**अभिवृष्टं विवर्णं च कलुषं स्थूलफेनिलम् ॥**
**विरसं गन्धवत्तप्तं दन्तग्राह्यतिशैत्यतः ।**
**अनार्तवञ्च यद्दिव्यमार्तवं प्रथमञ्च यत् ॥**
**लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम् ।**
**तत्कुर्यात्स्नानपानाभ्यांतृष्णाध्मानोदरज्वरान्**
**कासाग्निसादाभिष्यन्दकण्डूगण्डादिकानतः ।**
**तद्वर्जयेदभावे वा तोयस्यान्यस्य शस्यते ॥**
**घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम् ।**
**व्यापन्नस्यास्य तपनमग्न्यर्कायसपिण्डकैः ॥**
**पर्णीमूलविसग्रन्थिमुक्ताकतकशैवलैः ।**
**वस्त्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनम् ॥**
**पाटलाकरवीरादिकुसुमैर्गन्धनाशनम् ।**

कीटमूत्रादियुक्तं जलं स्नानपानादिना तृष्णादीन् कुर्यात् । कीटादीनां क्रिम्यादीनां मूत्रेण विशा कोथेन चा-

विलं मिश्रीभूतम् । कोथीभूतशरीरक्लेदः । तृणसमूहेन चाविलम् । उत्करोमहादिमार्जनराशिः । पंकादिभिश्च संस्तृतं गृहीतप्रस्तारम् । हठोनिर्मूलोद्भवस्तृणविशेषः । तथा सूर्यादिभिरदृष्टम् । तथा क्षुद्रजन्तुभिः क्रिमिभिर्जुष्टं सेवितम् । अभिवृष्टं तत्कालपतितान्यवर्षामिश्रीभूतम् । तथा घनम् । तथा स्थूलफेनिलं बृहत्फेनयुक्तम् । विरसं दुर्गन्धि । अतिशीतञ्च । दिव्यमान्तरिक्षमनार्तवमनृतौ पतितम् । ऋतुदेशविशेषेण नियतएव। वर्षस्य वर्षाएवेति केचित् । ऋतावपि प्रथमपातितं न पेयम् । लूतादिदूषितञ्च । एतच्च यतस्तृष्णाध्मानादिकान् कुरुते अतोवर्जयेत् । सर्वेचेमे रोगावक्ष्यमाणलक्षणाः । एतैश्चोपहतं अन्यजलालाभे कृतसंस्कारं शस्यते। तमेव च संस्कारं दर्शयति । घनवस्त्रपरिस्रावणेन क्षुद्रजन्त्वभिरक्षणं कार्यम् । व्यापन्नस्य पैच्छिल्यादियुक्तस्य अग्निना सूर्येण । तप्तशर्करापिण्डमज्जनेन वा तापनं कार्यम् । पर्णीमूलादिना प्रसादनं निर्मलीकरणं कार्यम् । पर्णीमूलमेरकामूलम् । एरका काश्मीरेषु "पित्ती" अन्यत्र दण्डेरकपट्टेरकभेदेन प्रसिद्धा । बिसग्रन्थिना मुक्ताभिः कतकफलेन शैवलेन वस्त्रस्रावणेन गोमेदकेन वा । बिसग्रन्थिर्बिपादिका । कतकं प्रसिद्धम् । शैवलं कच्छर् । गोमेदकनंकोलकम् । मणिविशेषश्च । पाटलादिपुष्पैः दुर्गन्धनाशनं संपादनीयम् ॥

**पानीयं न तु पानीयं पानीयेऽन्यप्रदेशजे ॥**
**अजीर्णे क्वथितश्चाऽमे पक्के जीर्णेऽपि नेतरत्**
**शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत् ॥**

सर्वं पानीयमन्यप्रदेशजे पानीये अजीर्णे न पानीयं न पेयमिति । तेनैतदुक्तं भवति विजातीये पानीये पीते तज्जरणान्तं यावद्विजातीयं पानीयं न पेयमिति । यथा कौपे ताटाकं ताटाके कौपमिति । एवं सर्वत्र । तथा आमे अपक्वजले अजीर्णे क्वथितं पक्कं न पेयम् । तथा पक्के क्वथिते जीर्णेऽपि इतरदामं न पेयम् । सजातीयमपि पक्के जीर्णेऽपि यावन्न भुक्तं तावदामन्न पेयमित्यर्थः । एष च विधिर्द्वयोरप्यामपक्वयोः शीतयोः । तप्तेत्वजीर्णएव शीतन्त्यजेन्न जीर्णे ॥

**पानीयं प्राणिनां प्राणाविश्वमेव च तन्मयम् ।**
**अतोऽत्यन्तनिषेधेन न कचिद्वारि वार्यते ॥**
**आस्यशोषांगसादाद्यामृत्युर्वा तदलाभतः ।**
**न हि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य वा**

अत्यन्तप्रतिषेधेन न कुत्रचिद्वारि वार्यते । यतः पानीयमाह्लादकत्वात् प्राणिनां प्राणाः विश्वञ्च सस्थावरजंगम पानीयमयमेव । यतः स्वस्थस्य व्याधितस्य च तोयाद्विना वर्तनं न भवति ॥

**केवलं सौषधं पक्वमाममुष्णं हितञ्च तत् ।**
**समीक्ष्य मात्रया युक्तममृतं विषमन्यथा ॥**

अवस्थाविशेषेण च केवलं सौषधं वा पक्वमामं शीतमुष्णञ्च तद्धितम् । तच्च पानीयं समीक्ष्य विषये मात्रया युक्तममृतम् । विपर्ययेण युक्तं विषम् ॥

**अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम् ।**
**प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः ॥**
**वर्धयत्यामतृण्निद्रातन्द्राध्मानांगगौरवम् ।**
**कासाग्निसादहृल्लासप्रसेकश्वासपीनसान् ॥**

अतियोगेन बाहुल्येन तृष्णावतोऽपि प्रयुक्तं सर्वस्य पित्तश्लेष्मतां याति । ज्वरितस्य विशेषतः आमेनाग्नौ बहिष्कृते ज्वरोत्पत्तिरामस्य च पानीयं तर्पकम् । तस्य च ज्वरितस्याऽमतृडादीन् वर्धयति । हृल्लासः सप्रसेकोहृदयोत्क्लेशः । प्रसेकः स्वतन्त्र एव तच्च ष्ठीवनम् ॥

**पाके स्वादु हिमं वीर्ये तदुष्णमपि योजितम् ।**
**तस्मादयोगपानेन लाघवाच्च वियोजयेत् ॥**

सर्वञ्च जलं मधुरविपाकं यतस्तत् स्पर्शोष्णमपि शीतवीर्यम् । अतः अयोगपानेनातिस्वल्पपानेन लाघवात्स्वल्पत्वाच्च वियोजयेत् । स्वल्पत्वं तस्य न चालनीयमित्यर्थः॥

**आमविष्टब्धयोःकोष्णंनिष्पिपासोऽप्यपःपिबेत् ।**
**यावत्यः क्लेदयन्त्यन्नमतिक्लेदोऽग्निनाशनः ॥**
**विबद्धः कफवाताभ्यां मुक्तामाशयबन्धनः ।**
**पच्यते क्षिप्रमाहारः कोष्णतोयद्रवीकृतः ॥**

आमविष्टब्धयोः पिपासारहितोऽप्युपकारायैवं ईषदुष्णा अपः पिबेत् । आमं श्लेष्मणोपहतजठरत्वादजीर्णमन्नम् । विष्टब्धमप्येवं वाताजीर्णम् । एतौ द्वावप्यामविष्टब्धौ मात्राशीतीये वक्ष्यमाणलक्षणौ । तयोश्च तावतीअपः पिबेत् यावत्योऽन्नं क्लेदयितुं समर्थाः । अतिक्लेदेन चाग्निनाशभयात् बह्व्यो न पेयाः । कफवाताभ्यां जठरे पिण्डाग्निश्लमपच्यमानमन्नं कोष्णतोयद्रवीकरणान्मुक्तामाशयबन्धनं सत् क्षिप्रमेव पच्यते । मुक्तं बन्धनमामाशये निबन्धनं येन

स तथा ।

अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च ।
नाल्पमप्यामसुदकं हितं तद्धि त्रिदोषकृत् ॥
तेजसः प्रतिपक्षत्वान्मन्दाग्निर्वर्जयेज्जलम् ।
सर्वमेव तथा स्यन्दप्लीहविद्रधिगुल्मिनः ॥
पाण्डूदरातिसारार्शोग्रहणीशोषशोफिनः ।
काममल्पमशक्तौ तु पेयमौषधसंस्कृतम् ॥
ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि चाल्पशः

अनवस्थितदोषस्यानवस्थिताग्नेश्च स्वल्पमप्यामं जलं न पथ्यम्। तद्धचाममेषां त्रिदोषकृत्। अनवस्थिताः स्वरूपाच्चलिताअनेकरूपाश्च दोषायस्य स तथाविधः । एवमनवस्थिताग्निरपि । तथा व्याधिभिः क्षीणं बलं यस्य तस्याऽप्युदकं त्रिदोषकरम् । तथा मन्दाग्निः सर्वमेव जलं कौपादिकमामं स्वल्पं पक्वं बहु च वर्जयेत् । तथाऽभिष्यन्दाद्यार्तैश्च सर्वमेव जलं वर्जनीयम् । अभिष्यन्दोनाम चक्षूरोगोवक्ष्यमाणः । अशक्तौ तु विना जलं प्राणसन्धारणासामर्थ्ये कदाचित् पेयम् । तच्च स्वल्पम् । किंभूतमल्पं पेयं आह । रोगयोग्यैरौषधैस्संस्कृतम् । तथा शरदं निदाघं च वर्जयित्वा अन्यस्मिन्नृतौ स्वस्थेनापि स्वल्पं पेयं एतयोस्तु यथेच्छमेव ॥

भक्तस्याऽदौ जलं पीतमग्निसादं कृशांगताम् ।
अन्ते करोतिस्थूलत्वमूर्ध्वंश्चाऽऽमाशयात् कफम्
मध्ये मध्यांगतां साम्यं धातूनां जरणं सुखम् ।

तच्च जलं भोजनकाले अन्नात् पूर्वं पीतं अग्निमान्द्यं कार्श्यं च करोति । सर्वं च भुक्त्वा अन्ते पीतं शरीरस्य स्थौल्यं आमाशयादुपरि च श्लेष्मवृद्धिं करोति । मध्ये त्वन्नस्य पीतं समांगतां समधातुतां च करोति । सुखेन चान्नं जरयति ॥

शीतं मदात्ययग्लानिमूर्छाछर्दिश्रमभ्रमान् ॥
तृष्णोष्णदाहपित्तास्रग्विषाणि च निहन्ति तत्

शीतञ्च तदंबु मदात्ययादीन् वक्ष्यमाणलक्षणान् निहन्ति नाशयति उष्णेन कालेन उष्णेनाऽऽहारादिना च दाहः उष्णदाहः ॥

क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात् ।
क्वथितं फेनरहितमवेगममलं हितम् ॥
हिध्माध्मानानिलश्लेष्मतृट्कासश्वासपीनसे।
पार्श्वशूलाममेदस्सु सद्यःशुद्धौ नवज्वरे ॥
दीपनं पाचनं कण्ठ्यं लघुवस्तिविशोधनम् ॥

तच्चांबु हिध्मादिषु क्वथितं पेयम् । का क्वथनमात्रेत्यत्रोच्यते । देशर्तुगुरुलाघवं विकल्प्य क्षीणचतुर्भागं वा क्षीणत्रिभागं वा क्षीणार्धं वेति त्रिधा । तेनैतदुक्तं भवति । यत् क्वचिद्देशऋतौ वा स्वल्पेन गुरुत्वेन युक्तमुदकं तत् क्वथनेन क्षीणचतुर्भागम् । अधिकगुरौ क्षीणत्रिभागम्। अत्यन्तगुरौ अर्धक्षीणमिति। एतद्विपरीतञ्च लाघवेऽप्येवं व्याख्येयं तच्च जलमग्निसंयोगेऽपि आफेनपरिक्षयादामं भवति । फेनरहितन्तु क्वथितं भवति । वेगरहितत्वञ्च पक्वलक्षणं निर्मलत्वञ्च । तच्च पक्वं हिध्मादीनां हितम् । उष्णमुदकं दीपनं आमदोषपाचनम् । स्वयं लघु वस्ति शोधनं च ॥

पाषाणरूप्यमृद्धेमजतुतापाकेतापितम् ॥
पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडर्तिजित् ।
लघ्वरूक्षं क्रमघ्नश्च तोयं क्वथितशीतलम् ॥
संसर्गे पित्तकफयोः सन्निपाते च शस्यते ।
तोयं वन्हिगुणभ्रष्टं पाकेऽम्लं सर्वदोषकृत् ॥
भवेत् पर्युषितं तच्च—

तप्तैश्च पाषाणादिभिस्तापितं तत्कालोष्णं शीतमेव वा पीतं त्रिदोषघ्नं तृष्णाघ्नं च । क्वथितशीतलं लघुत्वादियुक्तम्। संसर्गे पित्तश्लेष्मणोः सन्निपाते च पथ्यम् । उत्तरत्र शीतस्य वातश्लेष्मकोपहेतुत्वेनोक्तेः । वाते वातश्लेष्मणि कफे च न पथ्यम् । तच्च क्वथितशीतलं पर्युषितं विगताहोरात्रं सद्वन्हिगुणाल्लघुत्वदीपनीयत्वादितः भ्रष्टं रहितं भवति। अम्लविपाकं दोषकरं च ॥

—तोयं हिमकरोद्भवम् ।
अतिशैत्यगुरुस्थैर्य संघातैः कफवातकृत् ॥
चन्द्रकान्तभवं रक्षोविषपित्तज्वरापहम् ।
दृष्टिमेधावपुस्थैर्यकरं स्वादु हिमं लघु ॥
नाळिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णापित्तानिलहरं दीपनं वस्तिशोधनम् ॥

हिमकरसुतं तोयमतिशैत्यादिना वातश्लेष्मकृत् चन्द्रकान्तमणिसुतं रक्षोघ्नत्वादियुक्तम्। नाळिकेरान्तर्जातं स्निग्धत्वादियुक्तम् ॥

**दिव्यं वारि वरं वर्षे नादेयमवरं परम् ।**

**इति तोयवर्गः ।**

वर्गार्थमुपसंहरति । वर्षकाले आन्तरिक्षं जलं अत्यन्तपथ्यं नदीगृहीतमपथ्यम् । इति तोयवर्गः ॥

**स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ।**
**वातपित्तहरं वृष्यं श्लेष्मळं गुरुशीतळं ॥**
**प्रायः पयः—**

तोयान्युक्त्वा क्षीराण्युच्यन्ते स्वादुपाकरसमित्यादि । सर्वमपि विशेषेण क्षीरजातं मधुररसं मधुरविपाकत्वादियुक्तम् । ओजसे हितमोजस्यं ओजोनाम धातुसारभूतं वक्ष्यमाणलक्षणम् । वृष्यत्वेन शुक्राख्यधातुवृष्यतिशयस्त्रीगमनशक्तता चोक्ता । प्रायोबाहुल्येन सर्वमेवं विधं पयइति ॥

**—अत्र गव्यन्तु जीवनीयं रसायनम् ।**
**क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ॥**
**श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः।**
**जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ॥**

सामान्येन पयोगुणसंकीर्तनं कृत्वा गवाविशेषेण क्रियते । तत्र च सामान्योक्तगुणविपरीतोयोविशेषगुणः सोऽपवादोविशेयः । अथचेत् सदृशः स तस्यैवोपबृंहकः । गव्यन्तु जीवनीयत्वादियुक्तम् । जीवनीयं सौम्यधातुवृद्धिकरम् । रसायनमिव रसायनं प्राणसन्धारकत्वाच्छस्तरसादिधातुलाभोपायत्वाच्च । उरःक्षतयुक्ताय क्षीणाय च हितम् । क्षीणः क्षीणधातुः । मेधायै बुध्यै हितं मेध्यम् । स्त्रीणाञ्च स्तन्यवृद्धिं करोति । सरं शरीरे नैकत्र तिष्ठति । श्रमादींश्च नाशयेत् ॥

**हितमत्यग्न्यनद्रेभ्योगिरीयोमाहिषं हिमम् ।**

माहिषं पयोऽत्यग्नीनामनिद्राणां च हितं पथ्यम् । अतिगुरु च । वीर्येण च हिमम् ॥

**अल्पांबुपानव्यायामकटुतिक्ताशनैर्लघु ॥**
**आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ।**

अजानां पयः अल्पांबुपानादिहेतोर्लघु हेतुकीर्तनमस्यान्यस्याअप्येवं हेतुयुक्तायाजातेः क्षीरलघुत्वज्ञापनार्थम् एतद्विपरीतायाश्च गुरुत्वं सामर्थ्यलभ्यम् । अजानान्तु स्वल्पांबुपानादि स्वभावः । अन्यासान्तु देशाद्यपेक्षया । एतच्चाऽजं शोषादिविनाशनम् ॥

**ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ॥**
**शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम् ।**

औष्ट्रमेवौष्ट्रकं क्षीरं ईषद्रूक्षमीषल्लवणमीषदुष्णम् । दीपनम् । लघु च वातश्लेष्माद्यार्तानाञ्च पथ्यम् ॥

**मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ॥**
**तर्पणाश्च्योतनैर्नस्यैः—**

मानुषं क्षीरं वातेन पित्तेनासृजा अभिघातेन चोत्पन्नानां चक्षुरोगाणां नाशनम् । कथमित्युच्यते । तर्पणेनाश्च्योतनेन नस्येन च । एतानि चास्मिन्नेव स्थाने वक्ष्यमाणलक्षणानि ॥

**—अहृद्यं तूष्णमाविकम् ।**
**वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ॥**

आविकमहृद्यमुष्णवीर्यं वातव्याधिविनाशनं हिध्मादिकरं च ॥

**हस्तिन्याः स्थैर्यकृत् बाढं—**

हस्तिन्याः पयोबाढमतिशयेन शरीरस्थैर्यकृत् ॥

**—उष्णं त्वैकशफं लघु ।**
**शाखावातहरं साम्ललवणं जडताकरम् ॥**

एकशफस्येदमैकशफं पयः उष्णवीर्यं शाखावातहरं मधुररसमीपदम्ललवणेन च रसेन युक्तं जाड्यकरं च। एकविभागः खुरोयस्य स एकशफः अश्वगर्दभादिः । शाखारक्तादयोधातवस्त्वक्च । तत्रस्थितस्य वातस्य नाशनम् । जाड्यं स्तैमित्यम् ॥

**पयोऽभिष्यन्दि गुर्वामं युक्त्या शृतमतोऽन्यथा**
**भवेत् गरीयोऽतिशृतं धारोष्णममृतोपमम् ॥**

इति पयः स्वरूपेणोक्त्वा संस्कारेणोच्यते । आममपक्वं पयः अभिष्यन्दि गुरु च । अभिष्यन्दि मालिन्येन स्रोतसां स्रावकम् । युक्त्या शृतं पयः आमाद्विपरीतम् । नातिशृतं न स्वल्पशृतमिति युक्तिः । अतिशृतञ्चातिगुरु । धारोष्णममृतोपमं पथ्यत्वेन ॥

**पिण्याकाम्लाशिनीनां तु गुर्वभिष्यन्दि तत् भृ-**
**[शम् ।**
**अचेष्टया च प्रादोषात् गरीयः स्मृतमौषसम् ॥**
**व्याख्यातस्तेन लघिमा चेष्टावत्प्रकृतिष्वपि ।**
**ह्रस्वेषु चातिदेहेभ्योमांसेष्वप्येवमादिशेत् ॥**

पिण्याकं निष्पीडितरसं तिलादि । अम्लरसं चान्यत् किंचित् याः क्षीरयोनयःअश्नन्ति तासां पयः अतिगुर्वत्यभिष्यन्दि च । प्रदोषे अपराह्णे गृहीतं यत् पयः तदपेक्षया औषसं प्रभातगृहीतं अतिगुरु । कुतः चेष्टारहितत्वात् यस्मात् प्राणिनां रात्रौ न कदाचिच्चेष्टा भवति अत औषसं गुरु । दिवा च धावनप्लवनादिकया चेष्टया प्रादोषं लघु । अनया च दिशा चेष्टावत्प्रकृतिष्वपि लघिमा व्याख्यातः । तेनैतदुक्तं भवति चेष्टास्वभावेषु हरिणादिषु लघु । अचेष्टस्वभावेषु सूकरादिषु गुरु । अतिदेहान्महाभोगशरीरानपेक्ष्य स्वल्पाभोगशरीरेषु लघु पयः । न केवलं पयस्सु यावन्मांसेष्वपि चेष्टास्वल्पत्वबृहत्वविशेषेण गुरुलाघवं निर्ज्ञेयम् ॥

अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ।
मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत् ॥
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ।
पीनसे मूत्रकृच्छ्रे च रूक्षन्तुग्रहणीगदे ॥
नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न ।
नामुद्गसूपं नाक्षौद्रं नाघृतं नासितोपलम् ॥
न चानामलकं नापि नित्यं नो मन्दमन्यथा ।
ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमम् ॥

दधि त्वम्लविपाकत्वादियुक्तम् । रोचिष्णु साधु रोचते । अरुचौ पथ्यम् । अन्यदप्याहारं रोचयतीत्यर्थः । शीतके शीतपूर्वके विषमज्वरे सततकादौ पथ्यम् । पीनसो नासास्रावः । रूक्षन्तूद्धृतसारं ग्रहणीदोषे हितम् । तच्च दधि रात्रौ न भोज्यं एवकारो रात्रावुष्णे चात्यन्तप्रतिषेधाय । वसन्तग्रीष्मशरत्सु न भोज्यं न च मुद्गसूपादीनामन्यतमेन रहितम् । नापि नित्यं सातत्येन न भोज्यं न च मन्दं अजातम् । एवं च सति यदि कश्चित् भुंक्ते सोऽवश्यं ज्वरादीन् प्राप्नोति ॥

तक्रं लघु कषायाम्लं दीपनं कफवातजित् ।
शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ॥
गुल्मप्लीहघृतव्यापत्गरपाण्ड्वामयान् जयेत् ।
तद्वन्मस्तु सरं स्रोतश्शोधि विष्टंभजिल्लघु ॥

तक्रं दण्डेन मथिताद्दध्नः उद्धृतेऽनुद्धृते वा स्नेहे तत्तक्रं लघुत्वादियुक्तम् । घृतव्यापत् घृतस्यातिपानादुत्पन्नो रोगः । गरो वक्ष्यमाणलक्षणः तद्वत्तक्रवत् गुणैर्मस्तु विज्ञेयं मस्तुनः स्रोतश्शोधकत्वेन विष्टंभनाशकत्वेन च विशेषः तक्रस्य स्रोतश्शोधकत्वेऽपि मस्तुनोऽतिशयः ॥

शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतं ।
यक्ष्मार्शोर्दितपित्तासृग्वातजिद् ग्राहि दीपनम्
क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित्

नवोद्धृतं सद्यउद्धृतं नवनीतं शीतं शीतवीर्यं मधुरं कषायाम्लत्वेन च युक्तं राजयक्ष्मादिनाशनं संग्राहि दीपनं च । संग्राहि द्रवान् भावान् पिण्डीकरोति । क्षीरोद्भवनवनीतं रक्तपित्ताक्षिरोगं नाशयति । संग्राहि च । क्षीरोद्भवं यत् क्षीरमेव मथित्वोत्पादितम् ॥

शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम् ॥
बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम् ।
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ॥
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ।
स्नेहानामुत्तमं शीतं वयसः स्थापनं घृतम् ॥
सहस्रवीर्यं विधिभिः घृतं कर्मसहस्रकृत् ।
मदापस्मारमूर्छायशिरःकर्णाक्षियोनिजान् ॥
पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ।
पूर्वोक्तांश्चाधिकान् कुर्यात् गुणांस्तदमृतोपमम्
तद्वच्च घृतमण्डोऽपि रूक्षस्तीक्ष्णस्तनुश्च सः ।

घृतन्तु धीप्रभृतीनामभिग्लपितात्मान्तानां शस्तं हितम् । धीर्बुद्धिर्वस्तुग्रहणे शक्तिः । स्मृतिरतीतविचारे शक्तिः । मेधा प्रज्ञा वस्तुविवेकशक्तिः । प्रजार्थिनां च । प्रजा अपत्यं शुक्रस्य सफलताकरमित्यर्थः । वयःस्थापनं जरयाविना वयः स्थापयतीति वयःस्थापनम् । सहस्रवीर्यमनेकशक्ति । तथा विधिभिर्विधानैर्नानाविधाभिर्योजनाभिः कर्मसहस्रकृदनेककार्यकृदित्यर्थः । तच्च घृतं पुराणमतीतबहुकालं मदादीन् व्याधीन् जयति । व्रणानां पैच्छिल्यादिकं शोधयति । व्रणांश्च रोपयति । तच्च पुराणं पूर्वोक्तान् सामान्यघृतोक्तान् गुणाधिक्येन करोति । अमृतोपमं च । घृत-

मण्डोऽपि घृतगुणानाधिकं कुर्यादमृतोपमश्च रूक्षत्वेन तीक्ष्णत्वेन तनुत्वेन चास्य विशेषः । मण्डउपरिभवः स्वच्छः

**कीलाटदधिकूर्चीकातक्रापिण्डकमोरटाः ॥**
**सक्षीरशाकपीयूषारोचनावह्निसादनाः।**
**शुक्रनिद्राकफकराविष्टंभिगुरुदोषळाः ॥**

कीलाटादयः सर्वे क्षीरविकाराः तद्विकृतिविकाराश्च । बलकरारुच्याः अग्निनाशनाः शुक्रादिकराश्च विष्टंभिनोगुरवोदोषळाश्च । दोषळाअपथ्यत्वेन विकारकारिणः । कीलाटास्तक्रादिकृताः । कूर्चिकाः क्षीरकीलाटिकाः । मोरटः क्षीरसदृशः कीलाटिका । पीडन उत्तरापथे प्रसिद्धः । क्षीरशाकं प्रसिद्धं पीयूषं सद्यःसूतायाः क्षीरकृतं दधि ॥

**विद्याद्दधिघृतादीनां गुणदोषान् यथापयः ।**

घृतानाञ्च पयोगुणानातिक्रमेण गुणान् विद्यात् तेनैतदुक्तं भवति । यथा स्वादुपाकरसमित्यादिना सामान्येन क्षीरगुणाउक्तास्तद्वत् सामान्येन दध्यादिगुणाअपि विशेषाकांक्षायां तु दध्यादीनां सत्स्वपि सामान्यगुणेषु प्रकृतिभूतक्षीरगुणान्वयोऽपि ग्राह्यः ॥

वर्गार्थं निर्धारयति ।

**गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाऽविसंभवे॥**

**इतिक्षीरवर्गः ।**

क्षीरं घृतञ्च गव्यं श्रेष्ठम् । आविकं निन्दितं प्राधान्यात्त क्षीरघृतयोरेव ग्रहणम् । इति क्षीरवर्गः ॥

**इक्षोस्सरोगुरुः स्निग्धोबृंहणः कफमूत्रकृत् ॥**
**वृष्यश्शीतःपवनजित् भुक्ते वातप्रकोपनः ।**
**रक्तपित्तप्रशमनः स्वादुपाकरसोरसः ॥**

इक्षुरसवर्गोद्रवप्रसंगेनोच्यते । इक्षोरसः सरत्वादिगुणयुक्तः बृंहणोवक्ष्यमाणलक्षणः पवनजिद्वातनाशनः । भुक्ते भुक्तमात्रे पीतोवातप्रकोपनः ॥

**सोऽग्रे सलवणोदन्तपीडितः शर्करासमः ।**

स च रसः अग्रे इक्षोः प्रान्ते जातः । सलवणः ईषल्लवणः दन्तपीडितोयन्त्रकालाद्यनुपहतत्वात् गुणैः शर्करया समः ॥

**मूलाग्रजन्तुजग्धादिपीडनान्मलसंकरात् ।**
**किञ्चित् कालविधृत्या च विकृतिं याति यान्त्रिकः ॥**
**विदाहीगुरुविष्टंभी तेनासौ—**

यस्तु यान्त्रिकोयन्त्रपीडितोमूलादिमिश्रपीडनात् मलसंकरात् वैकृत्यं प्राप्नोत्यतोऽसौ यान्त्रिकोविदाही विष्टंभकरश्च । जन्तुजग्धः क्रिमिभक्षितः विदाही सौम्यभावविदहनशीलः । हेतुनिर्देशोहेत्वभावात् कार्याभावप्रतिपादनार्थः । रक्तपित्ते च विशिष्टे विशेषेण विदहनशीलस्यापि प्रयोगोन विरुद्धः ॥

**—तत्र पौण्ड्रकः ।**

**शैत्यप्रसादमाधुर्याद्वरस्तमनुवांशिकः ॥**
**शातपर्वककान्तारनैपाळाद्यास्ततः क्रमात् ।**
**सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः**

तत्र चेक्षुरसेषु मध्ये पौण्ड्रकः शैत्येन प्रसन्नत्वेन माधुर्येण च श्रेष्ठः सर्वेक्षुरसेभ्यः । तमनु वांशिकः शैत्यादिभिः पौण्ड्रकाद्धीनोवांशिकइत्यर्थः । शातपर्वकादयश्च रसाः क्रमादुत्तरोत्तरं शैत्यादिभिर्हीनाः । ते च शातपर्वकादयः ईषत्क्षारत्वेन युक्ताः ईषत् कषायरसाईषदुष्णवीर्याः किञ्चिद्विदाहिनश्च ॥

**फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।**
**नातिश्लेष्मकरोधौतः सृष्टमूत्रशकृत् गुडः ॥**
**प्रभूतक्रिमिमज्जासृङ्मेदोमांसकफोऽपरः ।**
**हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत्**

फाणितं क्षुद्रगुडीभूतमिक्षुरसः । तत् गुर्वभिष्यन्दि त्रिदोषसञ्चयकृत् मूत्रसंशोधनं मूत्रमतिवाहयति । गुडः संस्कारवशेन निर्मलः नातिश्लेष्मकरईषत्श्लेष्मकरइत्यर्थः । तथा मूत्रं शकृच्च सृजति। बहिः क्षिपति तथा अपरः अधौतः प्रभूतान् क्रिम्यादीन् करोतीत्युपचारात् स एवोक्तः । स एव च गुडः पुराणोहृद्यः शरीरस्य च पथ्यः । नवस्तु कफमग्निसादं च करोति ॥

**वृष्याः क्षीणक्षतहितारक्तपित्तानिलापहाः ।**
**मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः ॥**
**तत्गुणा तिक्तमधुरा कषायायापशर्करा ।**
**त्रिदोषघ्नी सिताकाशेषुदर्भच्छदसंभवा ॥**
**दाहतृट्छर्दिमूर्छास्रक्पित्तघ्न्यः सर्वशर्कराः ।**

मत्स्यण्डिकादयस्त्रयोवृष्यत्वादियुक्ताः क्रमेण । पूर्वस्मादुत्तरोवृष्यत्वादिभिरातिशयेन युक्तः । मत्स्यण्डिकागुडनिर्मलाः प्रसिद्धाश्च लोके । ततोऽपि संस्कारेण गुणैश्चाधि

कः खण्डः । ततोऽपि सिता शर्करा । यासशर्करा तु तद्गुणा मत्स्यण्डिकादिगुणा तिक्तमधुरकषायरसा च । यासशर्करा लोके यवासशर्करेति प्रसिद्धा । काचित् भवन्ति दुरालभारसेन सा क्रियत इति । एताअन्याश्च काश्चन सर्वाः शर्कराः दाहादिनाशनाः ॥

वर्गार्थं निर्धारयति ।

**शर्करेक्षुविकाराणां फाणितं च वरावरे ॥**

इक्षुविकाराणां मध्ये शर्करा श्रेष्ठा । फाणितमश्रेष्ठं इति

**चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत् ।**
**कुष्ठमेहकृमिच्छर्दिश्वासकासातिसारजित् ॥**
**व्रणशोधनसंधानरोपणं वातलं मधु ।**
**रूक्षं कषायमधुरं तत्तुल्या मधुशर्करा ॥**
**उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत् ।**
**विषान्वयत्वेन विषपुष्पेभ्योऽपि यतो मधु ॥**
**कुर्वते ते स्वयं यच्च सविषाभ्रमरादयः ।**
**प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ॥**
**अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते ।**
**गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ॥**
**न हि कष्टतमं किञ्चित्तदजीर्णाद्यतो नरम् ।**
**उपक्रमविरोधित्वात् सद्यो हन्याद्यथा विषम् ॥**
**नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ।**
**वृष्ययोगैरतो युक्तं वृषतामनुवर्तते ॥**
**भ्रामरं पौष्पिकं क्षौद्रं माक्षिकं च यथोत्तरम् ।**
**वरं जीर्णं च तेष्वन्त्ये द्वे एव ह्युपयोजयेत् ॥**

**इतीक्षुवर्गः।**

शर्करायोनिप्रसंगेन मधुनोऽपि गुणाउच्यन्ते । मधु माक्षिकं वातळं चक्षुष्यश्च पथ्यम् । छेदि विच्छेदि यत्तीक्ष्ण्याद्देहे पिण्डितान् भावान् छिनत्ति विभजति तृडादींश्च नाशयति । व्रणानां शोधनं तत् यत् पूयपैच्छिल्यादिप्रेरकम् । सन्धानं तत् । यत् द्वौ व्रणोष्ठावेकीकरोति । रोपणं प्रसिद्धम् । तथा मधु रूक्षम् । रसेन च कषायमधुरम् । अस्य च सर्वात्मकस्यापि कारणविशेषात् प्रभावाद्वाऽनुमीयते वातळत्वादियोगः । तत्तुल्या मधुसमा गुणैर्मधुशर्करा । तच्च मधु उष्णं निहन्ति मारयति । उष्णार्तं च पुरुषं मारयति । अतउच्यते विषान्वयत्वेन । कुतो विषान्वयत्वं मधुनः अत आह विषपुष्पेभ्योऽपि यतो मधु कुर्वन्ति तत्कृतः । न केवलमन्यपुष्पेभ्यः इत्यपिशब्दस्यार्थः । यद्यस्माच्च भ्रमरादयः स्वयं शरीरेणैव सविषा मधु कुर्वन्त्यतः उष्णादियुक्तं मारयति । तच्च मधु प्रच्छर्दने वमने निरूहे च उष्णमपि न निवार्यते । यतः अपक्वमाश्वेव प्रयुक्तं निवर्तते पुनरागच्छति । गुरुत्वादितो हेतोः शरीरे चाल्पं पथ्यम् । तथाच मधुनः अजीर्णादन्यत् कष्टतमन्न विद्यते । कुतः यतोविरुद्धोपक्रमत्वाद्विषवन्नरं नाशयति । अजीर्णेह्युष्णोदकपानादिकं विहितम् । तच्च मधुनो विरुद्धम् । अथ च शीता क्रिया क्रियते । सा ह्यजीर्णेऽप्यपथ्या । अत उपक्रमविरोधः तच्च मधु नानाद्रव्यस्वरूपत्वादत्यर्थं योगवाहित्वेनयुक्तः । तेनैतदुक्तं भवति सर्वाः शक्तयः प्रसेवकवत्तत्रस्थिताः केवलं या या शक्तिः सदृशी संयोगिद्रव्ये शक्तिं सहायभूतामासादयति सा सा तामतिशयेनाभिव्यनक्ति । एतदेव हि योगवाहित्वं यत् स्वगुणापरित्यागेनांशेन साद्दृश्यात् परस्य च शक्तिपरिपूरणम् । अतएव कारणाद्वृष्ययोगैर्युक्तं मधु वृष्यतां याति । एतावता हि वृष्ययोगस्य तु शक्तिः तेन परिपूरिता भवति । भ्रमरादिभिश्च कृतं मधु यथोत्तरं श्रेष्ठम् । यद्यस्मादुत्तरं तत्तस्माच्छ्रेष्ठमिति । जीर्णं पुराणं मधु श्रेष्ठम् । तेषु भ्रमरादिषु मध्ये द्वे एवान्त्ये क्षौद्रं माक्षिकं च पथ्यत्वादुपयोजयेत् । इति इक्षुवर्गः ॥

**तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ।**
**त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ॥**
**कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।**
**बद्धविट्कं क्रिमिघ्नं च संस्कारात्सर्वरोगजित्**
**तैलप्रयोगादजरानिर्विकारा जितश्रमाः ।**
**आसन्नतिबला युद्धे दैत्याधिपतयः पुरा ॥**

द्रवत्वात्तैलमुच्यते । तैलं स्वयोनिवत् । सर्वं तैलं स्वकारणसमगुणम् । तत्र तैलेषु मध्ये मुख्यं तिलोद्भवं तीक्ष्णम् । व्यवायि व्याप्तिशीलम् । यद्देहं व्याप्य पाकं याति । त्वग्दोषकृत् पानाभ्यासेन त्वचं दूषयति । यैस्तु त्वग्दोषहरमित्युक्तं तैर्वातादिके अभ्यंगेन । अथवा त्वग्दोषं कृन्ततीति त्वग्दोषकृदिति । कृति छेदन इत्यस्य धातोः प्रयोगः । चक्षुष्यआहितम् । सूक्ष्मस्रोतःप्रवेशि । उष्णवीर्यम् । तिलोद्भवत्वाच्छ्लेष्मकरत्वं प्राप्तमतउच्यते कफकृन्नचेति । संस्कारवशात् कृशस्य बृंहणायालं पर्याप्तम् । स्थूलानाञ्च

कर्शनाय । अथवा केवलमपि येनैव हेतुना स्रोतःशोधकत्वादिना कृशानां बृंहणायालं पर्याप्तम् । तेनैव हेतुना स्थूलानां कर्शनायेति न कश्चिद्विरोधः । अन्यैव च पञ्चस्य युक्तस्य संस्कारात् सर्वरोगजिदिति स्वयं पाठात् । विशं पुरीषं बध्नाति अथयतीति बद्धविट्कम् । संस्कारं प्रतिरोगं विशिष्टमाश्रित्य सर्वरोगजित् । तैलप्रयोगानिनिहासरूपेण कथयति तैलप्रयोगादित्यादिना । दैत्याधिपतयः पुरा वृद्धत्तिवलाः जरादिरहिताश्चाऽभवन् ॥

सतिक्तोषणमैरण्डं तैलं स्वादु सरं गुरु ।
वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम् ॥
रुक्छोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ॥

ऐरण्डं तैलं तु ईषत्तिक्तकटुकं रसेन मधुरं वर्ध्मादीन् जयेत् कट्यादिस्थितौ तु रुक्छोफौ नाशयति ॥

तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्विति

लोहितैरण्डतैलमतिशयेन तैक्ष्ण्यादियुक्तम् ॥

उमाकुसुंभजं चोष्णं त्वग्दोषकफपित्तकृत् ।

उमातैलं कुसुंभतैलश्चोष्णवीर्ये त्वग्दोषञ्च करोति पित्तश्लेष्माणौ च ॥

दन्तीमूलकरक्षोघ्नकरञ्जारिष्टशिग्रुजम् ॥
सुवर्चलेंगुदीपीलुशंखिनीनीपसंभवम् ।
सरळागरुदेवाह्वशिंशपासारजन्म च ॥
तुवरारुष्करोत्थं च तीक्ष्णं कट्वस्रपित्तकृत् ।
अर्शःकुष्ठक्रिमिश्लेष्मशुक्रमेदोनिलापहम् ॥

दन्त्यादिजं तैलं तैक्ष्ण्यादिगुणयुक्तम् । रक्षोघ्नं सार्षपम् । सरळादीनां सारशब्देन संबन्धः ॥

करञ्जनिंबजे तिक्ते नात्युष्णे तत्र निर्दिशेत् ।

करञ्जनिंबतैलयोस्तु कटुत्वापवादः तिक्तत्वम् । नात्यन्तोष्णवीर्ये चेमे ॥

कषायतिक्तकटुकं सारळं व्रणशोधनम् ॥

सरळकाष्ठसारजं तैलं कषायादिरसं व्रणशोधनञ्च अत्र कषायतिक्तत्वं व्रणशोधनत्वञ्चाधिकम् ॥

भृशोष्णतीक्ष्णकटुके तुवरारुष्करोद्भवे ।
विशेषात् क्रिमिकुष्ठघ्ने तथोर्ध्वाधोविरेचने ॥

तुवरारुष्करतैलयोस्तैक्ष्ण्याद्यतिशयः । अर्शःक्रिमिकुष्ठनाशने चातिशयः । ऊर्ध्वाधोविरेचनं वमनविरेचनाभ्यां दोषनिर्हरणम् । तेनाधिके ॥

अक्षातिमुक्तकाक्षोळनाळिकेरमधूकजम् ।
त्रपुसोर्वारुकूश्माण्डश्लेष्मातकप्रियाळजम् ॥
वातपित्तहरं केश्यं श्लेष्मळं गुरु शीतळम् ।

अक्षातिमुक्तकादितैलं वातपित्तहरत्वादियुक्तम् । अक्षं बिभीतकम् । अतिमुक्तकं माधवीफलम् ॥

पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम् ॥

श्रीपर्णीकिंशुकतैलं पित्तश्लेष्मशमनम् । श्रीपर्णी काश्मर्यः किंशुकः पलाशः ॥

तिलतैलं वरं तेषु कौसुंभमवरं परम् ।

तेषु च तैलेषु मध्ये तिलतैलं पथ्यत्वेनातिश्रेष्ठम् तद्विपरीतं कौसुंभम् ॥

वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ॥
मांसानुगस्वरूपौ च विद्यान्मेदोपि ताविव ।

स्नेहप्रसंगेनेदमप्युच्यते । वसा नाम तनुमेदोरूपं शुद्धमांसस्नेहः । मज्जा च धातुः । तौ वातं नाशयतः । बलपित्तकफांश्च कुरुतः । यस्य प्राणिनः संबन्धिनौ तन्मांससदृशस्वरूपौ च । मेदोऽपि वसामज्ज्ञोः सदृशम् ॥

चौलूकीसौकरी पाकहंसजा कुक्कुटोद्भवा ॥
वसाश्रेष्ठा स्ववर्गेषु कुंभीरमाहिषोद्भवा ।
काकमद्गुवसा तद्वत् कारण्डोत्था च निन्दिता

चुलुक्यादीनां चतुर्णां वसाः स्ववर्गेषु क्रमेण मत्स्यमहामृगाप्चरविष्किरेषु पथ्यत्वेन श्रेष्ठास्तद्वत् स्ववर्गेषु मध्ये कुंभीरादिवसाश्रेष्ठाः ॥

शाखादमेदसां च्छागं हास्तिनं च वरावरे ।

इति तैलवर्गः ।

शाखादानां मध्ये च्छागं मेदः श्रेष्ठम् । ये शाखाः प्रायो भुङ्क्ते ते शाखादाः । न तु भूयिष्ठं तृणादि स्वभावेनैव । इति तैलवर्गः ॥

दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ।
सस्वादुतिक्तकटुकमम्लपाकरसं सरम् ॥
स कषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ।
नष्टनिद्रातिनिद्रेभ्योहितं पित्तास्रदूषणम् ॥
कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ।
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ॥

गुरु तद्दोषजननं नवं जीर्णमतोऽन्यथा ।
पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ॥
नातितीक्ष्णमृदुस्वच्छघनं व्यापन्नमेव वा ।

मद्यमुच्यते। सर्वं मद्यं दीपनादिगुणयुक्तम्। तुष्टिर्मनःपरितोषः। पुष्टिः शरीरपोषः। नष्टनिद्रस्य चातिनिद्रस्य चाऽऽहारविशेषाद्वैपरीत्यं करोति। प्रभावाद्वा। एवं कृशस्थूलयोरपि युक्त्यां मात्रादिकया पीतमेवंगुणम्। अयुक्त्या विषवद्भवेत्। सा च युक्तिर्मदात्ययचिकित्सिते वक्ष्यमाणा। आचरणं वा। तत्र सर्वं मद्यं नवमनतीतसंवत्सरं गुरु त्रिदोषकरं च। केषाञ्चिन्मतानां कतिपयदिवसपरिवासो नवत्वम्। क्रमेण च तन्नाशः। जीर्णं पुराणमेतद्विपरीतम्। तच्च मद्यमुष्णोपचारेण न पेयम्। उष्णं वेश्माहारादिकमुपचारं यस्येति। क्षुधाविरेचनेन चादोषसाम्यान्न पेयम्। अतितैक्ष्ण्यमार्दवादियुक्तं च न पेयम्। व्यापन्नं देशकालाद्युपहतम्॥

अनन्तरं मद्यविशेषा उच्यन्ते।

गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः ॥
सुराऽनिलघ्नी मेदोसृक्स्तन्यमूत्रकफावहा ।

सुरा गुल्मादिनाशिनी मेदोरक्तादिकरी च। सुरा पिष्टकृता घना श्वेता॥

तद्गुणा वारुणी हृद्या लघुस्तीक्ष्णा निहन्ति च
शूलकासवमिश्वासविबन्धाध्मानपीनसान् ।

वारुणी नाम सुरा तद्गुणा अनन्तरोक्तसुरासमगुणा। इयं तु लघ्वी तीक्ष्णा च। शूलादींश्च निहन्ति। विबन्धः स्रोतसउपलेपेन दोषादीनामवहनम्॥

शूलप्रवाहिकाटोपतृष्णाशोफार्शसां हितः ॥
जगलः पाचनो ग्राही रूक्षस्तद्वच्च मेदकः ।
बक्कसो हृतसारत्वाद्विष्टंभी दोषकोपनः ॥

जगलो वारुण्याः सुराया अधोभागो घनः शूलप्रवाहिकादिहरः। प्रवाहिका निस्तानिका। आटोपो जठरे वायुना निश्चलेन सशब्दं पूरणम्। तथा पाचनः संग्रहणो रूक्षश्च। मेदकोनाम जगलस्याधोभागो गुणैर्जगलवद्विज्ञेयः। बक्कसोनाम पानीयेन मद्यकल्कपीडनो हृतसारत्वाद्विष्टंभी त्रिदोषकोपनश्च॥

नातितीव्रमदा लघ्वी पथ्या वैभीतकी सुरा ।
व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते ॥

विष्टंभिनी यवसुरा गुर्वी रूक्षा त्रिदोषळा ।
कौहळी बृंहणी गुर्वी श्लेष्मळस्तु मधूलकः ॥

विभीतकस्य सुरा अतितीव्रं मदं न जनयति। लघ्वी पथ्या। व्रणादिषु चात्यर्थं न विरुद्धा। यवसुरा विष्टंभकरी गुर्वी रूक्षा त्रिदोषकरा च। कौहळी सुरा बृंहणी गुर्वी च। मधूलकः श्लेष्मकरः। सर्वं मद्यमसज्जातं मधूलक इतिस्मृतः॥

यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ।
ग्रहणीपाण्डुकुष्ठार्शःशोषशोफोदरज्वरान् ॥
हन्ति गुल्मकृमिप्लीह्नः कषायकटुवातळः ।

अरिष्टसन्धानमुच्यते। स हि यैर्यैर्द्रव्यैः सिद्धस्तेषां गुणाननुगच्छति। सर्वैश्च दीपनत्वादिभिर्मद्यगुणैरधिकः। ग्रहण्यादिकांश्च रोगान्नाशयति। कषायकटुरसोवातकरश्च॥

मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ॥
अल्पपित्तानिलं पाण्डुमेहार्शःकृमिनाशनम् ।
अस्मादल्पान्तरगुणं खार्जूरं वातळं गुरु ॥

मार्द्वीकं द्राक्षारसं लेखनत्वादियुक्तम्। पित्तमनिलं चान्यमद्यापेक्षया स्वल्पं करोति। पाण्ड्वादिनाशनश्च। योऽतितैक्ष्ण्याच्छ्लेष्मादिकं विलिखति स लेखनः। खार्जूरमद्यं मार्द्वीकगुणैरूनम्। वातळं गुरु च॥

शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः ।
सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ॥
वातपित्तकरः शीधुः स्नेहश्लेष्मविकारहा ।
मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ॥

शर्करया कृतं मद्यं सुरभित्वादियुक्तम्। शीधुर्वातपित्तकरः। स्नेहविकारान् श्लेष्मविकारांश्च नाशयति। शीधुरपक्वेक्षुरसकृतः पक्वेक्षुरसकृतश्च। तत्र शीधुषु मध्ये पक्वरसो मेदःप्रभृतीनां नाशनः श्रेष्ठश्च॥

छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित्
सुरासवस्तीक्ष्णमदः स्वादुस्तीक्ष्णोऽनिलापहः ॥
मैरेयो मधुरो हृष्यः सरः सन्तर्पणो गुरुः ।
धातक्यभिषुतो जीर्णो रूक्षो रोचनदीपनः ॥
द्राक्षासवो मधुसमः परमं स तु दीपनः ।
मार्द्वीकसदृशः प्रोक्तो मृद्वीकेक्षुरसासवः ॥

मध्वासवो माधवकोनाम मद्यविशेषः । च्छेदी तीक्ष्णोमेहादिघ्नश्च । दुरारुवः नामोत्कृष्टमदः । मधुरस्तीक्ष्णो-वातघ्नश्च । मैरेयो मधुरत्वादियुक्तः । मैरेयः कोद्रवैः सह जायते । धातक्यासुतोजीर्णः पुराणः रूक्षोरुच्येऽग्निदीपनश्च न त्वेवं नवः । द्राक्षासवोमधुसमो माक्षिकसमः । अग्न्यात्यर्थदीपनः । मृद्वीकेक्षुरसाभ्यां कृतसन्धानासवोगुणैर्मार्द्वीकसमः ॥

**समासादासवोहृद्यो वातळः सौषधानुगः ।**

समासात् संक्षेपतः आसवगुणा उच्यन्ते यः कश्चिदासवः स सर्वोहृद्यो वातळः स्वौषधगुणश्च । आसवो योद्रवेण शुष्कमासुत्य क्रियते ॥

**द्राक्षेक्षुमाक्षिकं शालिरुत्तमा व्रीहिपश्चमाः ॥**
**मद्याकरा यत्तेभ्योऽन्यत्तन्मद्यप्रतिरूपकम् ।**
**गुणैर्यथोद्धणैर्विद्यान्मद्यमाकरसंकरात् ॥**

द्राक्षादयः पञ्चोत्तमा मद्याकरा मद्ययोनयः । एतद्वर्जितमन्यन्मद्यप्रतिरूपकम् । आकरसंकराच्च मद्यं गुणैर्दीप्नत्वादिभिर्यथोद्धणं विद्यात् । उद्धणस्य गुणाननुवर्तेत इत्यर्थः । तेनैतदुक्तं भवति । त्रिमद्याकरमिश्रीभावजातं मद्यमुद्धणेनाधिकेनाऽकरद्रव्येण सामानगुणम् । यो ह्याकरसंयोगेऽधिके भवति तद्गुणं मद्यमित्यर्थः ॥

**रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ।**
**विदाहिभृशतीक्ष्णोक्ष्णं हृद्यं रुचिकरं सरम् ॥**
**दीपनं शिशिरस्पर्शं पाण्डुदृक्क्रिमिनाशनम् ।**

शुक्तं रक्तपित्तकफानुत्क्लेदयति । वातञ्चानुलोमयति । विदाहित्वादिगुणयुक्तञ्च ॥

**गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ॥**
**कन्दमूलफलाद्यांश्च तद्वद्विद्यात्तदासुतान् ।**
**चाण्डाकी चाऽसुतं चान्यत् कालाम्लं रोचनं लघु**

गुडादिशुक्तानां यथोत्तरं लघुत्वं विज्ञेयम् । गुडकृताच्छुक्तादिक्षुशुक्तं लघु । इक्षुशुक्तादन्यन्मद्यशुक्तं लघु । सर्वमद्यशुक्ताच्च मार्द्वीकशुक्तं लघु । अन्ये तु ब्रुवते । गुडमद्यशुक्तादिक्षुमद्यशुक्तं लघु । इक्षुमद्यशुक्तान्मार्द्वीकमद्यशुक्तमिति । पूर्वस्तु पक्षो युक्तइति निर्णीतः । तथा धातकीगुडतोयादिकारणमद्यशुक्तयोरित्युक्तम् । कन्दादिकञ्च तदासुतं गुडशुक्ताद्यासुतं तद्वद्विद्यात् । आसवनशुक्तसमानगुणं जानीयादित्यर्थः । शाण्डाकी च शाकान्यासुत्य क्रियते या सा चान्यच्चाप्यनुक्तमासुतमासवनशुक्तगुणम् । कालेनाम सद्रुच्यं लघु च कालाम्लं नाम ॥

**धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतळम्**
**श्रमक्लमहरं रुच्यं दीपनं वास्तिशूलनुत् ॥**
**शस्तमास्थापने हृद्यं लघु वातकफापहम् ।**

धान्याम्लं काञ्चिकं भेदित्वादियुक्तम् । उष्णवीर्यम स्वभावनव स्पर्शशीतळम् । व्ययामादिना तान्तत्वं श्रमः निर्व्यायामादेरेव तान्तत्वं क्लमः । आस्थापनं वातनाशनेत्रेण द्रव्यस्य गुदप्रणिधानम् ॥

**एभिरेव गुणैर्युक्ते सौवीरकतुषोदके ॥**
**क्रिमिहृद्रोगगुल्मार्शः पाण्डुरोगनिबर्हणे ।**
**ते क्रमाद्वितुषैर्विद्यात्सतुषैश्च यवैः कृते ॥**

सौवीरकतुषोदके धान्याम्लगुणयुक्ते । क्रिम्यादिनाशे च । सौवीरकतुषोदके क्रमेणानुपूर्व्या वितुषैः सतुषैश्च यवैर्विद्यात् । तेनैतदुक्तं भवति । सौवीरकं यद्विस्तुषैर्यवैः क्रियते । तुषोदकं यत्सतुषैः क्रियते ॥

**मूत्रं गोजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ।**
**पित्तळं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥**
**क्रिमिशोफोदरानाहशूलपाण्डुकफानिलान् ।**
**गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥**
**विरेकास्थापनालेपस्वेदादिषु च पूजितम् ।**
**दीपनं पाचनं भेदि तेषुगोमूत्रमुत्तमम् ॥**

द्रवत्वात्तीक्ष्णत्वादेश्च प्रसंगेन च मूत्राण्यप्युच्यन्ते गवादीनां मूत्रं पित्तळत्वादिगुणयुक्तम् । क्रिम्यादींश्च जयेत् लघु च । रसे कटु । लवणमनुरसं स्वल्पं यस्य तत्तथाविधम् । विरेकादिषु च शस्यते । दीपनत्वादिगुणञ्च । तेषु च मध्ये गोमूत्रमुत्तमं प्रधानम् ॥

**श्वासकासहरं च्छागं पूरणात् कर्णशूलजित् ।**
**दद्यात् क्षारे किलासे च गजवाजिसमुद्भवम् ।**
**हन्त्युन्मादमपस्मारं क्रिमीन्मेहश्च रासभम् ॥**

च्छागमूत्रं कासश्वासहरम् । कर्णपूरणेन च कर्णशूलजित् । दन्तितुरगमूत्रे किलासे श्वित्रे उपयोगार्थं दद्यात् क्षारे च पच्यमाने । रासभं मूत्रं उन्मादादीन् हन्ति ॥

कषायतिक्त मेतेषां हिध्माश्वासहरं शकृत् ।
मार्गमोजःक्षयहरं वैष्किरं वातरोगनुत् ॥
प्रसहानामपस्मारमुन्मादश्च नियच्छति ।
महास्रगसमुत्भूतं कुष्ठहृज्जलचारिणाम् ॥
नेत्ररोगहरं पित्तं प्रवृद्धं च नियच्छति ।

एतेषामनन्तरोक्तानां मूत्रप्राणिनां शकृत् पुरीषं रसेन कषायतिक्तम् । हिध्माश्वासहरञ्च । अन्यत्सुबोधम् ॥

पित्तं तिक्तं विषँहरं रोचना कफवातजित् ॥
तिक्तापाप्माहरा—

एतेषामेव पित्तं जाठरमुपयुक्तं तिक्तरसं विषहरञ्च । एतेषामेव रोचना नाभिप्रदेशभवा वातश्लेष्मविनाशिनी तिक्तरसा पाप्माहरा च ॥

—मूत्रं मानुषन्तु विषापहम् ।
इति मद्यवर्गः ॥

मानुषन्तु मूत्रं विषघ्नम् । इति मद्यवर्गः ॥

तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात् ।
इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥

इत्यनन्तरोक्तेन प्रकारेण तोयादिवर्गैः प्रधानानतिक्रमेण द्रवाणामेकदेश उदाहृतः ॥

इतीन्दुविरचितायामष्टांगसंग्रहव्याख्यायां
सूत्रस्थाने षष्ठोऽध्यायः.

# सप्तमोऽध्यायः

द्रवस्यपानान्नसंस्काराद्युपयोग्यत्वादन्नमुच्यते ।

अथातअन्नस्वरूपाविज्ञानीयं नामाध्यायं व्याख्यास्यामः। इतिहस्माऽहुरात्रेयादयोमहर्षयः॥

* "क्रिमिहरः" इत्यपि पाठः ।

रक्तोमहान् सकलमस्तूर्णकः शकुनाहृतः ।
शारामुखोदीर्घशूको लोध्रशूकः सुगन्धिकः ॥
पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदोगौरशारिवौ ।
काञ्चनोमहिषः शूकोदूषकः कुसुमाण्डकः ॥
लांगला लोहवालाख्याः कर्दमाःशीतभीरुकाः
पतंगास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥
स्वादुपाकरसाः स्निग्धावृष्यावद्धाल्पवर्चसः ।
कषायानुरसाः पथ्यालघवोमूत्रळाहिमाः ॥

शूकधान्यानाञ्च प्राधान्यादग्रे पाठः रक्ताद्यास्तपनीयान्ताअन्ये च देशकालरसादिना रक्तादिसदृशाः शालयस्ते सर्वे मधुरविपाकरसत्वादियुक्ताः एते च सर्वे नानादेशप्रसिद्धनामानः । बद्धं ग्रथितं अल्पं च वर्चः पुरीषं कुर्वन्तीति बद्धाल्पवर्चसः स्वभावेनैव शरीरे हिताः ॥

शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ।
महांस्तश्चानु कळमस्तश्चाप्यनु ततः परे ॥

तत्र शूकजेषु मध्ये रक्तशालिः श्रेष्ठः तृष्णानाशनस्त्रिदोषनाशनश्च । ततो रक्तादूनो महान् । ततोऽप्यूनः कळमः । अनेनैव क्रमेण परे तूर्णकादयः पूर्वस्मादुत्तरोगुणैरून इत्यर्थः ॥

यवका हायनाः पांसुवाप्यनैषधकादयः ।
स्वादूष्णागुरवःस्निग्धाः पाकेऽम्लाः श्लेष्मपित्तळाः॥
सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः ॥

यवकादयोमधुरत्वादियुक्ताः यश्च यस्मात् पूर्वः स तस्मान्निन्द्यः ॥

स्निग्धोग्राही लघुः स्वादुः त्रिदोषघ्नः स्थिरोहिमः ।
षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ॥
ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ।
कुक्कटाण्डकलावाक्षपारावतकसूकराः ॥
वरकोद्दाळकोज्ज्वालचीनशारददर्दुराः ।
गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तराः स्मृताः॥

षष्ठिकोनाम व्रीहिः स्निग्धत्वादियुक्तः । स्थिरः शरीरे अव्यापनशीलः । स च सर्वव्रीहिषु श्रेष्ठः । तस्य षष्टिकस्य द्वैविध्यं गौरः कृष्णगौरश्च असितगौरतः कृष्णगौरात् गारः श्रेष्ठः । ततः षष्ठिकात् गुणैर्महाव्रीह्यादयः क्रमेणोनाः ॥

**स्वादुरम्लविपाकोऽन्यो व्रीहीः पित्तकरोगुरुः ।**

एतेभ्यः षष्टिकयवकादिभ्योऽन्योऽनुक्तो व्रीहिर्मधुरः अम्लविपाकः पित्तकरोगुरुश्च ॥

**बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥**

पाटलोनाम व्रीहिः त्रिदोषकरएव ॥

**कंगुकोद्रवजूर्णाह्वगदीवरुणपादिकाः ।**
**श्यामाकतोयश्यामाकहास्तिश्यामाकशिल्विकाः**
**शिशिरोद्दाळनीवारवरूकवरकोत्कटाः ।**
**मधूळिकान्तानिर्गण्डीवेणुपर्णीप्रशान्तिकाः ॥**
**गवेधुकाण्डलौहित्यतोयपर्णीमुकुन्दराः ।**
**कफपित्तहरारूक्षाः कषायमधुराः हिमाः ॥**
**वाबळाबद्धविण्मूत्रालघवोलेखनात्मकाः ।**

कंग्वादयः कफपित्तहरत्वादियुक्ताः अतएव निर्धार्यते व्रीहियोविशिष्टाः शूकधान्याः ॥

**भग्नसन्धानकृत्तत्र प्रियंगुर्बृंहणी गुरुः ॥**
**कोरदूषः परं ग्राहीस्पर्शे शीतो विषापहः ।**
**उद्दाळकस्तु वीर्योष्णो नीवारः श्लेष्मवर्धनः ॥**
**शीतवीर्या विशेषेण स्निग्धा वृष्या मधूळिका ।**

पियंगुः कंगुः भग्नस्यांगस्य सन्धानं करोति । बृंहणी गुर्वी च कोरदूषः कोद्रवः अत्यर्थसंग्रहणः । स्पर्शे शीतो विषहरश्च । उद्दाळकस्तु उष्णवीर्यः । नीवारः श्लेष्मवर्धनः । मधूलिका अत्यर्थशीतवीर्या स्निग्धा वृष्या च सर्वत्र चोत्सर्गापवादोपबृंहकवचनकल्पना च स्वयं कल्पनीया ॥

**रूक्षः शीतोगुरुः स्वादुः सरोविड्वातकृद्यवः**
**वृष्यः स्थैर्यकरोमूत्रमेदःपित्तकफान् जयेत् ।**
**पीनसश्वासकासोरुस्तंभकण्ठत्वगामयान् ।**
**गुणैर्न्यूनवराज्ञेयायवादनुयवाह्वयाः ।**
**उष्णाः सरावेणुयवाः कषायावातपित्तळाः ॥**

यवोरूक्षत्वादिगुणयुक्तः । एतैश्च त्वगामयनाशनान्तैर्गुणैःस्वल्पैर्युक्ता अनुयवाः अनुयवनामानोयवाः । ते च यवाकृतयोलोके प्रसिद्धाः । वेणुप्रान्तभवायवाउष्णवीर्याः सराः कषायरसाः वातपित्तळाश्च ॥

**वृष्यः शीतोगुरुः स्निग्धो जीवनो वातपित्तहा ।**
**सन्धानकारी मधुरो गोधूमः स्थैर्यकृत् सरः**
**पथ्या नन्दीमुखी शीता कषाया मधुरा लघुः**

**इति शूकधान्यवर्गः ।**

गोधूमोवृष्यत्वादियुक्तः । जीवनः सौम्यधातुवृद्धिकरः सन्धानकारी भग्नस्योरुप्रभृतेः सन्धानं करोति । नन्दीमुखी शरीरहिता रसे कषायमधुरा लघ्वी च । इति शूकधान्यवर्गः ॥

**शिंबिजामुद्गमंगल्यवनमुद्गककुष्ठकाः ।**
**मसूरकफलाढक्यश्चणकाश्चपृथग्विधाः ॥**
**कषायस्वादुलघवो विबन्धाध्मानकारिणः ।**
**रूक्षाबद्धमलाः शीताविपाके कटुकाहिताः ॥**
**पित्तासृक्कफमेदस्सु सूपालेपादियोजनात् ।**

शिंबिधान्यमुच्यते मुद्गाद्याः पृथग्विधाः नानाविधाः । रसेन कषायमधुराः लघवः । दोषनिबन्धमाध्मानं च कुर्वन्ति । बद्धपुरीषाः । शीतवीर्याविपाके कटुकाः । भोजनालेपपरिषेकादियोजनाच्च रक्तपित्तश्लेष्ममेदस्सु हिताः पथ्याः ॥

**सूप्यानामुत्तमामुद्गाल्पीयांसोऽल्पमारुताः ॥**
**हरितास्तेष्वपिवरामकुष्ठाः क्रिमिकारिणः ।**
**वर्ण्याः परं प्रलेपाद्यैर्मसूराग्राहिणोभृशम् ॥**

सूपे साधुः सूप्यः । तेषां सूप्यानां मुद्गाउत्तमाः प्रवराः । अतिलघवः स्वल्पवातळाश्च । तेषु मुद्गेषु मध्ये हरिताः शाड्वलवर्णावराः श्रेष्ठाः । कृष्णास्त्ववराः । मकुष्ठास्तु क्रिमिकराः । मसूराः प्रलेपादिभिर्युक्ताः परमत्यर्थेन वर्णकरास्संग्रहणाश्च ॥

**राजमाषोगुरुर्भूरिशकृद्रूक्षोऽतिवातळः ।**
**कषायस्वादुरूक्षोष्णाः कुलत्थारक्तपित्तळाः ॥**
**पीनसश्वासकासार्शोहिध्मानाहकफानिलान् ।**
**घ्नन्ति शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरम्**
**ग्राहिणोलघवस्तीक्ष्णाविपाकेऽम्लाविदाहिनः**

राजमाषोगुरुः प्रभूतपुरीषः । रूक्षोतिवातलश्च । कुलत्थाः कषायमधुरारूक्षा उष्णवीर्याः रक्तपित्तकराः पीनसादिनाशनाश्च । शुक्राश्मरीं घ्नन्ति । शुक्रं रेतः तेनाश्मरी वक्ष्यमाणा । दृष्टिं दर्शनशक्तिं च नाशयन्ति । संग्रहणालवनस्तीक्ष्णा अम्लविपाका विदाहिनः ॥

निष्पावस्तु सरोरूक्षः कषायमधुरोगुरुः ॥
पाकेऽम्लोवातविङ्भीस्तन्यमूत्रास्रपित्तकृत् ।
उष्णोविदाही दृक्छुक्रकफशोफविषापहः ॥

निष्पावस्तु सरत्वादियुक्तः वातकरः उष्णवीर्यः विदाही दृशं रेतः कफं शोफं विषं च नाशयति । निष्पावोराजशिंबिः ॥

माषः स्निग्धोबलश्लेष्ममलपित्तकरः सरः ।
गुरूष्णोऽनिलहा स्वादुश्शुक्रवृद्धिविरेककृत् ॥
फलानि गुणवद्विद्यात् काकाण्डोलात्मगुप्तयोः
कुशाम्रशिंबी मधुरा वातपित्तहरा हिमा ॥

माषः स्निग्धत्वादियुक्तः । मलं पुरीषम् । शुक्रस्य रेतसोवृद्धिं बहुत्वं विरेकं बहिःप्रेरणं च करोति । काकाण्डोलात्मगुप्तयोश्च फलानि माषवत् गुणैर्विद्यात् । काकाण्डोला कटभिः । कुशाम्रशिंबी नाम शिंबिधान्यम् सा मधुरा वातपित्तहरा शीतवीर्या च ॥

मधुराश्शीतलागुर्व्योबलघ्न्योरूक्षणात्मिकाः ।
स्नेहाढ्यावलिभिर्भोज्या विविधाश्शिंबिजातयः

अनुक्तानां सामान्यमुच्यते । विविधाश्शिंबिजातयोमधुराश्शीतवीर्यागुर्व्योबलघ्न्योरौक्ष्यापादनस्वभावाः । ताश्च स्नेहाढ्याघृतादिबहुलास्सत्योबलवद्भिः पुरुषैर्भोज्याः ॥

स्निग्धोष्णतिक्तकटुकः कषायमधुरास्तिलः ।
मेध्यः केश्योगुरुर्वर्ण्यः स्पर्शशीतोऽनिलापहः ॥
अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ।
कृष्णः प्रशस्तस्तमनु शुक्लस्तमनुचारुणः ॥

तिलः स्निग्धत्वादियुक्तः । रसे तिक्तादियुक्तः । विपाके कटुकः । मूत्रस्याल्पत्वकरोल्पमूत्रः । मेधाग्निकफपित्तकरश्च । मेधा प्रज्ञा । तेषु च तिलेषु मध्ये कृष्णतिलश्श्रेष्ठः । ततश्शुक्लऊनः । शुक्लादप्यरुणऊनतरः ॥

स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरीगुरुः
दृक्छुक्रहृत् कटुः पाके तद्वत् बीजं कुसुंभजम् ॥

उमा अतसी स्निग्धा रसेन मधुरतिक्ता उष्णवीर्या कफपित्तकरी गुर्वी च ।दृशं शुक्रञ्च नाशयति । कटुविपाका च । तद्वदुमावत् कुसुंभबीजम् ॥

माषोऽत्र सर्वेष्ववरोयवकश्शूकजेषु च ।
नवं धान्यमभिष्यन्दि सेक्यं केदारजश्चयत् ॥
लघु वर्षोषितं दग्धभूमिजं स्थलसंभवम् ।
शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम् ॥

इति शिंबिधान्यवर्गः ।

अत्र शिंबिधान्यवर्गे माषः अश्रेष्ठः । शूकधान्यमध्ये यवकः अश्रेष्ठः । नवमगतसंवत्सरं धान्यमभिष्यन्दि मालिन्येन स्रोतसां स्रावकम् । तथा सेक्ये बहूदके केदारे जातं अभिष्यन्दि । लघु वर्षोषितम् । तथा दग्धभूमिजञ्च । तथा स्थलसंभवं निरुदककेदारजम् । शीघ्रजन्म अचिरकालपाकम् । तथा सूप्यं मुद्गादि तुषरहितं युक्त्या च भर्जितं सत् निस्तुषम् । इति शिंबिधान्यवर्गः ॥

मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।
यथापूर्वं शिवस्तत्र मण्डोवातानुलोमनः ॥
तृड्ग्लानिदोषशेषघ्नः पाचनोधातुसाम्यकृत् ।
स्रोतोमार्दवकृत् स्वेदी सन्धुक्षयति चानलम् ॥

धान्यानां स्वरूपमुक्तम् । अनन्तरोक्तानि रक्तादीनि सत्स्वपि स्वरूपगुणेषु संयोगसंस्कारप्रमाणादिविशेषेण गुणान्तरयोगमपि यान्ति तद्विज्ञानार्थं कृतान्नवर्गारंभः । मण्डादीनां यथापूर्वं लघुत्वम् । तेनैतदुक्तं भवति । ओदनमपेक्ष्य लघ्वी विलेपिका । ततोऽपि पेया द्रवा लघुतरा । ततोऽपि मण्डोऽत्यर्थद्रवोलघुः । ओदनस्य पूर्वकत्वाभावान्न लघुत्वं न गुरुत्वमुक्तम् । एतदेव निर्धारयति । मण्डोवातस्यानुलोमनः । तृडादिघ्नश्च । दोषस्य वमनविरेचनादिना निर्हृतस्य शेषोदोषशेषः । पाचनोधातुसाम्यकरश्च । स्रोतोमार्दवं करोति । स्वेदयत्यग्निबोदीपयति ॥

क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ।
मलानुलोमनी पथ्या पेया दीपनपाचनी ॥

पेया क्षुदादिहरा ॥

विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥

विलेपिका सङ्ग्राहिणी हृद्या तृष्णाघ्नी दीपनी च व्रणादीनाञ्च हिता । संशुद्धः कृतवमनविरेचनः ॥

सुधौतः प्रस्रुतः स्विन्नस्त्यक्तोष्मा चौदनोलघुः
यश्चाग्नेयौषधक्वाथसाधितोभृष्टतण्डुलः ॥
विपरीतोगुरुः क्षीरमांसाद्यैर्यश्च साधितः ।
इति द्रव्यक्रियायोगमानाद्यैस्सर्वमादिशेत् ॥

ओदनः सुष्ठु धौतः प्रस्रुतः स्विन्नः त्यक्तबाष्पश्च लघुः । ऊष्मा बाष्पोजलभागोगुरुत्वहेतुः । अत्युष्णातिशीतयोः प्रमाणान्तरान्निषेधः । केचित् सिध्युष्णस्य लाघवमभ्युपगच्छन्तः स्विन्नः अत्यक्तोष्मा चेति पठन्ति । यत्र चैषां पुनरुष्णप्रतिषेधः स सिद्धिशब्दाशयः । यश्चोदनआग्नेयानां मरिचादीनां क्वाथेन संसिद्धः सोऽपि लघुः । तथा भृष्टैस्तण्डुलैस्सिद्धओदनोलघुः । यथोक्तलक्षणादोदनाद्विपरीतोगुरुः । क्षीरमांसादिभिर्मधुरैर्यश्च साधितः सोऽपि गुरुः । इत्यनया दिशा सर्वं कृतान्नं द्रव्यस्य स्वरूपेण क्रियया संयोगेन प्रमाणेन च बोद्धव्यम् । किं स्वरूपेण गुणानां स्वनिबन्धकेन उपबृंहकेन संयोगिना द्रव्येण संयुक्तमिति नानाविधाविकल्पनेन कृतान्नस्वरूपञ्जानीयात् ॥

शुष्यतांव्याधिमुक्तानांशुद्धानां शुद्धिकांक्षिणाम्
कृशक्षामक्षतोरस्कक्षीणधात्विन्द्रियौजसाम् ॥
दृष्टिश्रवणवह्न्यायुर्बलवर्णस्वरार्थिनाम् ।
भग्नाविशिष्टसन्धीनां व्रणिनां वातरोगिणाम् ॥
हृद्यः पथ्यः परं वृष्योबृंहणःप्रीणनोरसः ।

रसोमांसरसः । शुष्यदादीनां पथ्यः । व्याधिमुक्तानां बलाधानार्थम् । शुद्धानां कृतवमनविरेचनानां पेयाद्यन्ते, शुद्धिकांक्षिणां चाचरणीयः संशोधनानां देहदोषमार्दवाय ॥

मौद्गस्तु पथ्यःसंशुद्धव्रणकण्ठाक्षिरोगिणाम् ॥
वातानुलोमी कौलत्थोगुल्मतूनिप्रतूनिजित् ।
प्रभूताभ्यन्तरमलो माषसूपः परं स्मृतः ॥

मौद्गस्तु रसोनिर्मांसयूषः संशुद्धादीनां पथ्यः । कौलत्थोरसोवातमनुलोमयति गुल्मादिनाशनश्च । तूनिप्रतूनी रोगौ गुल्मनिदाने वक्ष्यमाणलक्षणौ । माषसूपः परमत्यर्थमान्तरं मलं पुरीषं प्रभूतं करोति । माषाणां बहुमलत्वे उक्तेऽपि अन्येभ्यस्तद्विकृतिभ्यः सूपस्यातिशयख्यापनार्थं वचनम् ॥

खळकांबळिकौ हृद्यौ च्छेदिनौ स्वौषधानुगौ ।
पिशितेन रसस्तत्र यूषोधान्यैः खळः फलैः ॥
मूलैश्च तिलकल्काम्लप्रायः कांबळिकः स्मृतः
ज्ञेयाः कृतकृतास्ते तु स्नेहादियुतवर्जिताः ॥
अल्पमांसादयः स्वच्छादकलावाणिकाः स्मृता

खळकांबळिकौ हृद्यौ छेदिनौ स्वसंस्कारकौषधगुण युक्तौ च । रसादीनां व्यवहारार्थं लक्षणमुच्यते । पिशितेन मांसेन यः क्रियते स रसः । धान्यैर्मुद्गादिभिर्यः क्रियते स यूषः । फलैर्बदरादिभिर्यः क्रियते स खळः । मूलैस्तिलैस्तिलकल्काद्यैश्च कृतोडाडिमाद्यम्लप्रायः कांबळिकः । ते तु रसादयोयथासंख्येन स्नेहादियुतवर्जिताः कृताकृताश्चेय तेनैतदुक्तं भवति स्नेहादिभिर्भर्जनेन शुण्ठ्यादिना च संस्कृताः कृतशब्दवाच्याः । विपरीताः अकृताः । ये स्वल्पेन मांसेन स्वल्पैश्च शुण्ठ्यादिभिः क्रियन्ते स्वच्छाश्च ते रसाद योदकलावणिकाः ॥

विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम् ॥
गौरवं तनुसान्द्राम्लस्वादुष्वेषु पृथक् तथा ।
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥
चाण्डाकीवटकं दृघ्नं दोषळं ग्लपनं गुरु ।
पर्पटालघवोरुच्यालघीयान् क्षारपर्पटः ॥

यूषरससूपशाकानां यथोत्तरमेव गौरवं विज्ञेयं द्रव्यगुणसाम्येऽपि । तथा तनुसान्द्राम्लस्वादुषु च पृथक् यथोत्तरमेव गौरवं विज्ञेयमिति । तेनैतदुक्तं भवति । तनुभ्योरसादिभ्यः सान्द्राघनागुरवः । अम्लेभ्यश्च मधुराइति । तिलपिण्याकस्य विकृतिः शुष्कशाकं विरूढकं चाण्डाकीवटकं च दृष्टिनाशनं दोषळं त्रिदोषकोपनं ग्लानिकरं गुरु च विरूढकं अंकुरितानि भृष्टानि सस्यानि । चाण्डाक्यासह सासुतं मुद्गादिवटकं चाण्डाकीवटकम् । पर्पटाभिधानाभक्ष्या लघवोरुचिकराश्च । तेभ्यश्च क्षारपर्पटोऽतिलघुः । यस्त्वाकि कादिजलेन संस्क्रियते ॥

हृद्यावृष्यारुचिकरागुरवोरागषाडवाः ।
प्रीणनाभ्रमतृट्च्छर्दिमदमूर्छाश्रमाच्छिदः ॥
तृट्च्छर्दिश्रमनुन्मन्थः शीतस्सद्योबलप्रदः ।
प्रमेहक्षयकुष्ठानि न च स्युर्मन्थपायिनः ॥
रसाळा बृंहणी वृष्यास्निग्धा बल्या रुचिप्रदा।
श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ॥

विष्टंभि मूत्रळं हृद्यं यथाद्रव्यगुणश्च तत् ।

रागाः सितामध्वादिकृताः । षाडवाअम्लसिद्धशाकशर्करादिकृताः । हृद्यावृष्याहचिकरागुरवश्च । तथा प्रीणनामनःप्रीतिकराः । श्रमादिनाशनाश्च । रसाळा करमथितेन मरिचशर्करादिसंयुक्तेन च दध्ना कृता । बृंहणी देहस्य बृंहत्वकरी वृष्यत्वादिगुणयुक्ता च । सर्वं च पानकं श्रमादिहरं प्रीतिकरं गुरु विष्टंभि मूत्रळं हृद्यं च । तच्च पानकं यथाद्रव्यगुणं स्वसंस्कारद्रव्यगुणसंयुक्तम् च ॥

लाजास्तृतृच्छर्द्यतीसारमेहमेदः कफच्छिदः ॥
कासपित्तोपशमनादीपनालघवोहिमाः ।
पृथुकागुरवोबल्याः कफविष्टंभकारिणः ॥
धाना विष्टंभिनी रूक्षा तर्पणी लेखनी गुरुः ।
कण्ठनेत्रामयक्षुत्तृट्श्रमछर्दिव्रणापहा ॥
सक्तवोलघवः पानात् सद्य एव बलप्रदाः ।
निचयात् कठिना गुर्वी प्रोक्ता पिण्डीमृदुर्लघुः
सक्तूनां द्रवतायोगाल्लघीयस्यवलेहिका ।
शष्कुलीमोदकादीनां व्याख्यातैवं च कल्पना ॥
नोदकान्तरितान्न द्विर्न निशायां न केवलान् ।
न भुक्त्वा न द्विजैश्छित्वा सक्तूनद्यान्न वा बहून्
कर्कन्धुबदरादीनां श्रमतृष्णाक्लमच्छिदः ।
सक्तवोऽम्लरसाहृद्यायथाद्रव्यगुणाश्च ते ॥

लाजास्तृडादीन् च्छिन्दन्ति नाशयन्ति कासं पित्तञ्चोपशमयन्ति । अग्निदीप्तिकरालघवश्शीतवीर्याश्च । पृथुकागुरुत्वादियुक्ताः । हरितधान्यानि सतुषभृष्टमुसलाहतानि पृथुकशब्दवाच्यानि । धाना भृष्टधान्यानि विष्टंभिनी रूक्षादिगुणयुक्ता च । सक्तवः कण्ठामयनेत्रामयादिनाशनाः लघवः । उदकेन पीताश्च सद्यएव बलं कुर्वन्ति । तेषां सक्तूनां पिण्डीनिचयात् संहतत्वात् या कठिना सा गुर्वी । या तु मृदुः सा तु लघुः । ये तु सक्तवः उदकमिश्रा अवलिह्य भुज्यन्ते सा अवलेहिका द्रवत्वयोगात् लघीयसी । शष्कुलीमोदकादीनां भक्ष्याणामेवानयैव संयोगसंस्कारकाठिन्यादिविशेषदिशा गुणकल्पना व्याख्याता । सक्तूंश्चैवंविधान् नाद्यात् । उदकान्तरितानुदकेन जलेनान्तरितान् व्यवहितान् । आदौ पिण्डी मध्ये जलमन्ते च पिण्डीत्युदकान्तरितान् । द्वौ वारौ द्विः । निशायां रात्र्याम् । केवलाउदकादिरहितान् । भुक्त्वा चान्यदोदनादि । द्विजैश्छित्वा दन्तैः करस्थां पिण्डीं छित्वेत्यर्थः । बहूंश्च सक्तून्नाद्यात् । कर्कन्धुबदरादीनाञ्च फलादीनां सक्तवः क्लमादिच्छिदः अम्लरसाहृद्याश्च । ते सर्वे सक्तवः प्रकृतिद्रव्यगुणयुक्ताः ॥

पिण्याकोग्लपनोरूक्षोविष्टंभी दृष्टिदूषणः ।
वेशवारोगुरुः स्निग्धोबलोपचयवर्धनः ॥
मुद्गादिजास्तु गुरवोयथाद्रव्यगुणानुगाः ॥

पिण्याकोक्षोटतिलादीनांनिष्पीडिततैलकल्कः । ग्लानिकरोविष्टंभी दृष्टिविकारकरश्च । वेशवारः नागरधनिकाजाज्यादिसंस्कृतं सूक्ष्मच्छिन्नं मांसम् । स गुरुः स्निग्धः बलवर्धनोंगोपचयवर्धनश्च । मुद्गादिजास्तु वेशवाराः ये सूक्ष्मच्छिन्नैर्मुद्गयवधान्यादिभिः क्रियन्ते । लोके च पूरणमिति प्रसिद्धाः ते गुरवः प्रकृतिद्रव्यगुणाश्च । आदिग्रहणेन शिंबिधान्यानाञ्च वरकसूकराणामुलूकादीनाञ्च ग्रहणम् ॥

कुकूलकर्परभ्राष्टकन्द्वङ्गाराविपाचितान् ।
एकयोनीन् लघून्विद्यादपूपानुत्तरोत्तरम् ॥

इति कृतान्नवर्गः ॥

कुकूलादिसिद्धानपूपान् एकयोनीनेकशालिकारणान् सतोयथोत्तरं लघूनितिजानीयात् । तेनैतदुक्तं भवति सजातीयात् कुकूलपकात् कर्परपकोलघुरग्निसंयोगनैकट्यात् । कर्परपकाच्च भ्राष्टपकः । भ्राष्टपकाच्च कन्दुपकः । कन्दुपकाच्चांगारपकः । एकयोनिग्रहणं भिन्नयोनेस्समलाघवशंकानिरासार्थम् । एकोह्यपूपोगुरुशालियोनिः कुकूलपकोऽन्येन लघुशालियोनिना कुकूलपकेनैव न लाघवे समः । तथा एकोलघुशालियोनिः कुकूलपकोऽन्योगुरुशालियोनिः कर्परपकश्च समावित्यर्थः । अनया च कल्पनया सर्वमूह्यम् । कुकूलोबाष्पस्वेदः । क्षारपाकइत्यन्ये । कर्परोज्वालासन्तप्तकपालः । भ्राष्टं प्रसिद्धम् । कन्दुः अंगारतप्ता भित्तिः अंगारस्वरूपेणैव । इति कृतान्नवर्गः ॥

हरिणैणकुरंगर्श्यगोकर्णमृगमातृकाः ।
कालपुच्छकचारुष्कवरपोतशशोरणाः ॥
श्वदंष्ट्ररामशरभकोहकारकशंबराः ।
कराळकृतमालौ च पृषतश्च मृगाः स्मृताः ॥

अनन्तरं मांसमुच्यते । हरिणादयः पृषतान्ताः एकोनविंशतिमृगाविज्ञेयाः ॥

लाववातिकवर्तीररक्तवर्त्मककर्कराः ।
कपिञ्जलोपचक्राख्यचकोररुरुवाहवः ॥

वर्त्तकोवर्तिका चेति तित्तिरिः क्रकरश्शिखी ।
ताम्रचूडाख्यवरकगोनर्दगिरिवर्तिकाः ॥
तथा शारपदेन्द्राह्ववारटाश्चेति विष्किराः ।

लावादयोवारटान्ताएकविंशतिराहारस्य विकीर्य विक्षिप्य भक्षणाद्विष्किराः ॥

शतपत्रोभृंगराजः कोयष्टी जीवजीवकः ॥
खञ्जरीटकहारीतदुर्नामारिकुशाग्रहाः ।
लट्वा लड्डूषोवटहा गोक्ष्वेळोडिण्डिमाणवः ॥
जटी दुन्दुभिपाकारलोहपृष्ठकुलिंगकाः ।
शारिकाशुकशांर्गाख्यचिरीटीककुयष्टिकाः ॥
मञ्जरीयकदात्यूहगोधापुत्रभियात्मजाः ।
कळविंकः परभृतः कपोतोऽङ्गारचूडकः ॥
पारावतः पाणविकइत्युक्ताः प्रतुदाद्विजाः ।

शतपत्रादयः पाणविकान्ताश्चतुस्त्रिंशदाहारस्य शाल्यादेः प्रतुद्य तुण्डैराहत्यभक्षणाद्विजाः प्रतुदाः स्मृताः ॥

श्वेतः श्यामश्चित्रपृष्ठः कालकःकाकुलीमृगः ॥
भेकचिल्लटकूचीका गोधाशल्यकशाण्डकाः ।
वृषाहिकदलीश्वाविन्नकुलाद्याविलेशयाः ॥

श्वेताद्यानकुलाद्यान्ताविले भूगर्भे निषदनाद्विलेशयाः ॥

गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ।
मार्जारमूषिकव्याघ्रवृकवभ्रुतरक्षवः ॥
लोपाकजंबुकश्येनचाषोलूकश्ववायसाः ।
शशघ्नीभासकुररगृध्रवेश्यकुलिंगकाः ॥
धूमिका मधुहा चेति प्रसहामृगपक्षिणः ।

गवादयः मधुहान्ताः केचित् पक्षिणः केचिन्मृगाः । जात्या प्रसह्याहृत्य भक्षणाच्च प्रसहाः स्मृताः ॥

महिषन्यंकुरोहीतवराहरुरुवारणाः ॥
सृमरश्चमरः खड्गोगवयश्च महामृगाः ।

महिषादयोगवयान्तादश महामृगशब्दवाच्याः ॥

हंससारसकादंबवककारण्डवप्लवाः ॥
मृणाळकण्ठचक्राह्वबलाकारक्तशीर्षकाः ।
उत्क्रोशपुण्डरीकाक्षशरारीमणितुण्डकाः ॥
काकातुण्डघनारावमद्गुक्रौञ्चांबुकुक्कुटाः ।
नद्यास्योमल्लिकाद्याश्च पक्षिणाजलचारिणः

हंसादयोमल्लिकाद्यान्ताश्च जलएव चरणाज्जलचारि

मत्स्यारोहितपाठीनकूर्मकुंभीरकर्कटाः ।
शुक्तिशंखोद्रुशंबूकशफरीवर्त्मिचन्द्रिकाः ॥
चुलूकीनक्रमकरशिंशुमारतिमिंगलाः ।
राजी चिलिचिमाद्याश्च मांसमित्याहुरष्टधा

रोहितादयश्चिलिचिमाद्यान्ताः जलोद्भवामत्स्याः । त्वष्टभिः प्रकारैराचार्यामांसमाहुः ॥

योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते

एतासु चाष्टासु मांसयोनिषु मध्ये मिश्रयोनित्वा श्चविषयत्वादजावी अनिश्चिते । ते हि जांगलेऽपि देशे म्यग्वर्तेते आनूपेऽपि यद्यपि तित्तिरिरुभयचरः तथापि स तत्स्वभावत्वाद्वर्गेभ्यः पृथङ्नोक्तः । अजाअवयश्च केचि न्वनि केचिदानूपइति पृथगुक्ते । येषाञ्च नामपर्यायाः नादेशप्रसिद्धाः किरातकैवर्तादिभ्यः अपभ्रंशसंस्कारणाच्च ज्ञ व्याः । वर्तिका वर्तकाज्जात्यन्तरं न तु तस्य स्त्री ॥

आद्यान्त्याजांगलानूपामध्यौ साधारणौ स्मृ
विकीर्यादिक्रियायोगैर्भक्षणाद्विष्किरादयः ।

एषाञ्च वर्गाणां मध्ये आद्यास्त्रयोमृगविष्किरप्रतु जांगलाः जांगलशब्दवाच्याः । अन्त्यास्त्रयः महामृगजल रमत्स्याआनूपाः । मध्यौद्वौ विलेशयप्रसहौ साधारणौ । कीर्य भक्षणक्रियायोगाद्विष्किरादीनि नामानीत्युक्तम् ॥

तत्र बद्धमलारुच्यामांसानामुत्तमाहिमाः ॥
कषायस्वादुविशदालघवोजांगलाहिताः ।
पित्तोत्तरे वातमध्येसान्निपाते कफानुगे ॥

तत्र जांगलामलं पुरीषं बद्धं कुर्वन्ति । रुचिक मांसानाञ्चोत्तमाः । शीतवीर्यारसे कषायमधुराः विशदा घवः । सन्निपाते च हिताः । किंभूतइत्याह पित्तोत्तरइ दि । यस्मिन् सन्निपाते पित्तमुत्तरमधिकं वातोमध्यः क श्च स्वल्पः ॥

ताम्रोऽत्र हरिणः कृष्णस्त्वेणो हृद्यास्त्रिदोषजि
लघीयान् षड्रसश्चासौ ग्राहीरूक्षोहिमश्शशः
कटुपाकोऽग्निकृत् पथ्यस्सान्निपातेऽनिलावर

अत्र चैणहरिणावाकृत्या सदृशौ । केवलं ता

र्णो हरिणः कृष्णवर्णस्त्वेणः । असावेणो हृद्यस्त्रिदोषहरः, अतिलघुः षड्रसश्च । शशस्तु संग्रहणो रूक्षः शीतवीर्यः कटुविपाकोऽग्निवृद्धिकृत्, ऊनवायौ सन्निपाते च पथ्यः ॥

तद्वल्लावोऽप्यरूक्षस्तु किञ्चिद्रूक्षः कपिञ्जलः ॥
पारावताः कपोताश्च तद्वद्वन्याः सुपूजिताः ।
ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकादयः॥
तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ।
ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ॥
धन्वानूपविचारित्वात् स्निग्धोष्णगुरुबृंहणः।

लावोऽपि तद्वच्छशवत् । केवलमसावरूक्षः । कपिञ्जलः किञ्चिद्रूक्षः । पारावतकपोतौ वनजातौ पथ्यौ । गृहभूतावपथ्यौ । वर्तकात् प्रभृति यावज्जांगलपरिसमाप्तिः तावत्सर्वे औष्ण्येन गुरुत्वेन स्निग्धत्वेन च ईषत् स्वल्पं युक्ताः । तेष्वपि मध्ये तित्तिरिः श्रेष्ठः मेधादिकरः । संग्रहणो वर्ण्यो वाताधिकसन्निपातहरश्च। स तु तित्तिरिर्धन्वनि देशे विचरत्यानूपे च । अतः स्निग्ध उष्णो गुरुर्बृंहणश्च ॥

नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम्
तद्वच्च कुक्कुटो वृष्यो ग्राम्यस्तु श्लेष्मळो गुरुः ।
मेधानलकरा हृद्याः क्रकराः सोपचक्रकाः ॥
गुरुः सलवणः काणकपोतः सर्वदोषकृत् ।

शिखी मयूरो नातिपथ्यः । श्रोत्रादीनां पथ्यः। वयसश्च पथ्यः शीघ्रपरिणामरक्षणः । कुक्कुटस्तद्वन्मयूरवत् । अयं तु वृष्यः । ग्राम्यस्तु जनपदपरिवेशचरः श्लेष्मळो गुरुश्च। क्रकराः मेधामग्निं च कुर्वन्ति हृद्याश्च । तद्वदुपचक्रकाः । काणकपोतो गुरुः किञ्चिल्लवणस्त्रिदोषकरश्च ॥

गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥
मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तळाः ।

अतोऽनन्तरा विलेशयाद्या वर्गा यथोत्तरं गुरुत्वेनोष्णत्वेन चाधिकाः । स्निग्धत्वेन मधुरत्वेन चाधिकाः । यो यस्माद्वर्गादुत्तरो वर्गः स तस्मात् गुरुत्वादिभिरधिक इत्यर्थः । तथा सर्वे मूत्रं शुक्रं च कुर्वन्ति । बल्या वातघ्नाः पित्तश्लेष्मळाश्च॥

शीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः॥
चक्षुष्याः सृष्टविण्मूत्रा मांसळाः कटुपाकिनः।
जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ॥
गोधा नियच्छति विषं मूषिकः शुक्रवर्धनः ।

तेषु वर्गेषु मध्ये महामृगाः शीतवीर्याः । प्रसहाः क्रव्यादाः क्रव्यं मांसं भुञ्जते ये प्रसहाः ते चक्षुष्याः । मूत्रं विशश्च कुर्वन्ति । मांसवृद्धिकराः, कटुविपाकाः, जीर्णार्शोप्रभृत्यार्तानाञ्च पथ्याः । गोधा विषघ्नी । मूषिकः शुक्रवर्धनः शुक्रकरः ॥

शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ॥
कार्श्यकेवलवातांश्च गोमांसं सन्नियच्छति ।
चटकाः श्लेष्मळाः स्निग्धा वातघ्नाः शुक्रळाः परम्
गुरूष्णो महिषः स्निग्धः स्वप्नदार्ढ्यबृहत्वकृत् ।
तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ॥

गोमांसं शुष्ककासादीन् नाशयति । विषमज्वरः सततकादिः । केवलवाता नान्यदोषसंयुक्ताः । चटकाः कफहराः स्निग्धा वातघ्नाश्च परमत्यर्थं शुक्रकराः । महिषो गुरुरुष्णवीर्यः स्निग्धो निद्रादार्ढ्यं च करोति । वराहः सूकरः तद्वन्माहिषवद्गुणैर्ज्ञेय इत्यर्थः । असौ तु श्रमघ्नः, रुच्यादिप्रदश्च ॥

हंसः स्वरकरः पित्तरक्तजिन्मेदुरो हिमः ।

हंसः स्वरकरः, रक्तपित्तविनाशनश्च । यस्तु मेदुरोऽतिमेदाः स हिमः शीतः । केचित्तु चरकानुरोधान्मधुरः अहिमश्चेति पठन्ति ॥

कफपित्तकरा मत्स्याः परं पवननाशनाः ॥
प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च ।
रोहितः प्रवरस्तेषां परं चिलिचिमोऽवरः ॥
अगोचरविचारित्वात् सर्वदोषकरो हि सः ।
कुळीरः परमं वृष्यो बृंहणः प्रीणनो गुरुः ॥

मत्स्याः पित्तश्लेष्मकरा वातनाशनाश्च परमत्यर्थम् । तेषां मत्स्यानां मध्ये रोहितः प्रवरः प्रतिस्रोतोविचारित्वात् । तस्य ह्येवं स्वभावः, यत् प्रतिस्रोतः स्रोतस आभिमुख्येन विचरति । यया दिशा जलमेति तां दिशं यातीत्यर्थः । तथा पानीयमध्यात् स्वभावेनैवाकाशं प्लवते । अत उभयथापि क्रियायोगात् परमत्यर्थं रोहितः प्रवरः । चिलिचिमः परमत्यर्थं अवरः अश्रेष्ठः । स चागोचरे दुर्विषये कर्दम-

शैवलादौ यतो विचरत्यतस्त्रिदोषकरः । कुळीरः परमं वृष्यः बृंहणः प्रीतिकरः गुरुश्च । कुळीरः कर्कटकः ॥

**नातिशीतगुरुस्निग्धं मांसमाजमदोषळम् ।**
**शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥**
**विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत् ।**

आजं मांसं नातिशीतवीर्यं नातिगुरु नातिस्निग्धं अदोषळं दोषाणां साम्यं न नाशयति, पथ्यमित्यर्थः । सामर्थ्यालब्धपुरुषशरीरसकलशरीरधातुसादृश्यादनभिष्यन्दि मालिन्येन स्रोतसामस्रावकम् । एतदुक्तं दोषगुणविपरीतगुणत्वेनादोषळत्वाच्च शरीरधातुगुणत्वेन स्रोतसामप्रदूषकत्वाच्चानभिष्यन्दि । स्रोतःप्रदूषकरूपं शारीरे वक्ष्यति । यथा "आहारश्च विहारश्च यः स्याद्दोषगुणैः समः । धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः" इति । अत आजमांसाद्विपरीतमाविकं मांसम् । वैपरीत्येन बृंहणत्वं तत्तु बृंहणमिति विशेषः ॥

**अतिमेध्यं त्यजेन्मांसं हतं व्याधिविषोदकैः ॥**
**स्वयं मृतं धूमपूर्णमगोचरभृतं कृशम् ।**
**सद्योहतं वयस्थं च शुद्धं सुरभि शस्यते ॥**

सर्वं च मांसमतिमेध्यं मेदुरं त्यजेत् । व्याध्यादिभिश्च नष्टस्य मांसं त्यजेत् । तथा स्वयमात्मनैव मृतं धूमपूर्णं धूमेन मृतम् । तथा अगोचरभृतं अगोचरे अन्यस्मिन् विषये भृतं । यथा जाङ्गलमानूपे भृतमानूपं च जाङ्गले । कृशं च त्यजेत् । सद्योहतं वयस्थं सम्पूर्णावयवं शुद्धं तृणादिभिरनुपहतं अदुर्गन्धि च शस्यते ॥

**एणः कुरङ्गो हरिणः शशो लावः कपिञ्जलः ।**
**तित्तिरिः क्रकरो गोधा श्वाविड्गृध्रो मृगाधिपः**
**तथैव शारिका न्यङ्कुर्हंसो रोहितकच्छपौ ।**
**वर्मी चाग्र्याः स्ववर्गेषु प्रवरास्तेष्वपि स्मृताः**
**लावैणगोधाः सिंहाश्च—**

एणादयश्च स्ववर्गेषु प्रधानाः । एणकुरङ्गहरिणशशा मृगेषु मध्ये अग्र्याः वराः । लावकपिञ्जलतित्तिरिक्रकरा विष्किरेषु । शारिका प्रतुदेषु । न्यङ्कुर्महामृगेषु । हंसो जलचारिषु । रोहितकच्छपौ वर्मी च जलजेषु । तेष्वपि प्रधानेषु मध्ये प्रवराः । एणादिष्वेणः । लावादिषु लावः । श्वाविड्गोधयोर्गोधा । गृध्रमृगाधिपयोः सिंह इति ॥

**—निन्दितो गौः सदर्दुरः ।**
**ऋश्यः काणकपोतश्च शेषमुक्तं यथायथम् ॥**

गौः, दर्दुरः, ऋश्यः, काणकपोतश्चेति चत्वारः स्ववर्गेषु निन्द्या गर्हणीयाः । शेषं च यथायथं गुणैर्युक्तम् ॥

**गुरूण्यण्डानि बालानां कषायमधुरं पलम् ।**
**वृद्धानां स्नायुभूयिष्ठमबल्यं गुरुदोषळम् ॥**
**पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुः ।**
**लघुर्योषिच्चतुष्पात्सु विहङ्गेषु पुनः पुमान् ॥**
**शिरस्कन्धोरुपृष्ठस्य कट्याःसक्थ्नोश्च गौरवम्।**
**तथामपक्वाशययोर्यथापूर्वं विनिर्दिशेत् ॥**
**शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम् ।**
**मांसात् गरीयो वृषणमेढ्रवृक्कयकृत्गुदम् ॥**

## इति मांसवर्गः ।

अण्डानि पक्षिणां गुरूणि । बालानां पक्षिणां पलं मांसं रसे कषायमधुरं । वृद्धानां मांसं बहुस्नायु अबल्यं गुरु त्रिदोषकरं च । पुंसस्त्रियाश्च यथासंख्येन शरीरस्य पूर्वार्द्धं नाभेरूर्ध्वं पश्चार्द्धमधो नाभेर्गुरु । गर्भिणी च स्त्री गुर्वी । चतुश्चरणेषु मध्ये योषित् स्त्री लघुः । विहङ्गेषु पक्षिषु मध्ये पुमान् लघुः । शिरःप्रभृतीनामङ्गानां यथापूर्वं गुरुत्वं ज्ञेयम् । सक्थिमांसात् कटीमांसं गुरु । कटीमांसात् पृष्ठमांसं गुरु । एवमामाशयपक्वाशययोश्च यथापूर्वं गुरुत्वम् । पक्वाशयादामाशयो गुरुरित्यर्थः । रक्तादीनां च धातूनां यथोत्तरं गुरुत्वम् । सप्ताभिर्द्धात्वाग्निभिर्यथोत्तरमेव स्नेहस्य पाकाद्यथोत्तरमेव स्नेहस्य गुरुत्वं स्यात् । धातूनां तथाभूतेन स्नेहेन संश्लेषात् यथोत्तरमेव गुरुत्वं भवति । धातुस्नेहक्रमपरिणत्या च । उक्तं च हृदये । "परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा" । अनेन किमुक्तम् । रसादीनां शुक्रान्तानां परस्परोपसंस्तम्भादन्योन्यसंश्लेषाद्धातूनां स्नेहोत्कर्षक्रमपरिणतिर्यथोत्तरमेव जायते । अत्र च मांसानां स्त्रीपुंसकृतं विशेषमेकयोनीनां भिन्नयोनीनाञ्चोत्सर्गापवादस्थितार्थोपबृंहकवचनकल्पनं च यथायोगं स्वबुध्या परिकल्पनीयम् ॥ इति मांसवर्गः ॥

**शाकं पाठाशटीश्रूषासुनिषण्डसतीनजम् ।**
**त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ॥**
**सुनिषण्डोऽग्निकृद्वृष्यस्तेषु राजक्षवः परम् ।**

ग्रहण्यर्शोविकारघ्नो वर्चोभेदी तु वास्तुकः ॥
हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी ।
काकमाची सरा स्वर्या चाङ्गेर्यम्लाग्निदीपनी ॥
ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ।

शाकमुच्यते । पाठादिकं शाकं त्रिदोषनाशनं लघु संग्रहणं च । तद्वत् राजक्षवकवास्तुके । तेषु मध्ये सुनिषण्डोऽग्निकरो वृष्यश्च । सुनिषण्डो जलमध्ये भवति पत्रैश्चाङ्गेरीसदृशैः काश्मीरेषु शूल्येषु चातिप्रसिद्धः । राजक्षवोऽल्पर्थे ग्रहण्यर्शोविकारघ्नः । वास्तुकस्तु वर्चसः पुरीषस्य भेदनः । काकमाची त्रिदोषघ्नी कुष्ठनाशनी ईषदुष्णवीर्या सरा स्वास्थ्यसंवाहकत्वेन च रसायनसादृश्याद्रसायनी । चाङ्गेरी अम्ला अग्निदीपनी ग्रहण्यादिषु पथ्या संग्रहणी लघ्वी च । चाङ्गेरी क्षुद्राम्लिका ॥

पटोलसप्तलारिष्टशार्ङ्गेष्ठावल्गुजामृताः ॥
वेत्राग्रबृहतीवाशाकुतलीतिलपर्णिकाः ।
मण्डूकपर्णीकर्कोटकारवेल्लकपर्पटाः ॥
नाळीकळायगोजिह्वावार्त्ताकवनतिक्तकम् ।
करीरं कूलकं नन्दी कुवेला शकुलादनी ॥
कठिल्लं केबुकं शीतं सकोशातककर्कशम् ।
तिक्तं पाके कटुग्राहि वातळं कफपित्तजित् ॥

पटोलादीनि कर्कशान्तानि अष्टाविंशतिः शीतवीर्याणि । रसे तिक्तानि । विपाके कटुकानि । संग्रहणानि वातकृन्ति पित्तश्लेष्मनाशनानि च । सप्तला सातला । अरिष्टो निम्बः । शार्ङ्गेष्ठा अङ्गारवल्लिका । अवल्गुजः सोमराजी । अमृता गुळूची । वेत्रो वंशसदृशः । मण्डूकपर्णी मण्डूकी । सैवादित्यवल्ली । नाळीकळायः वाल्ही । सैव शकुलाक्षकः । एते सुवर्चलाविशेषाः । गोधूमिका तु गोजिह्वा गोजी कोष्टकमूलकः । वनतिक्तको नळखण्डकः । कूलकः काकतिन्दुकः । कुवेला पाठा । शकुलादिनी कटुका । कठिल्लः वर्षाभूभेदः । कोशातकं दधित्थम् ॥

अतो निर्द्धारणम् ॥

हृद्यं पटोलं क्रिमिनुत् स्वादुपाकं रुचिप्रदम् ।
पित्तळं दीपनं भेदि वातघ्नं बृहतीद्वयम् ॥
वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ।
कारवेल्लं सकटुकं दीपनं कफपित्तजित् ॥
वार्त्ताकं कटुतिक्तोष्णं मधुरं कफवातजित् ।
सक्षारमग्निजननं हृद्यं रुच्यमपित्तळम् ॥
करीरमाध्मानकरं कषायं स्वादुतिक्तकम् ।
कोशातकावल्गुजकौ भेदिनावग्निदीपनौ ॥
श्यामाशाल्मलिकाष्मर्यभङ्गीकर्णकयूथिकाः ।
वृक्षादिनीक्षीरवृक्षबिम्बीतनिकवृक्षकाः ॥
लोध्रः शणः कच्छुदारः सशेलुर्वृषमुष्टिका ।
भल्लातकः कोविदारः कमलोत्पलकिंशुकम् ॥
पटोलादिगुणं स्वादु कषायं पित्तजित् परम् ।

पटोलं हृद्यं क्रिमिनाशनं मधुरविपाकं रुचिकरं च । बृहती क्षुद्रबृहती च पित्तकरमग्निदीपनं शकृदादीनां च भेदनं वातनाशनं च । वृषं छर्दिकासौ नाशयत्यल्पर्थं च रक्तपित्तं नाशयति । कारवेल्लं रसे किञ्चित् कटुकत्वेन युक्तं अग्निदीप्तिकरं पित्तश्लेष्मनाशनं च । वार्त्ताकं रसे कटुतिक्तं मधुरमुष्णवीर्यं च वातश्लेष्महरं किञ्चित्क्षारत्वयुक्तं अग्निदीप्तिकरं हृद्यं रुचिकरं न च पित्तं करोति । यथा वातश्लेष्मघ्नं न तथा पित्तकरमित्यर्थः । करीरमाध्मानकरं रसे कषायमधुरं तिक्तं च । कोशातकावल्गुजकौ भेदिनौ वह्निदीपनौ च । श्यामादि किंशुकान्तं पटोलादिगुणयुक्तं रसे मधुरकषायं परमत्यर्थेन पित्तजित् । श्यामा त्रिवृत् । भङ्गी भार्ङ्गी । वृक्षादनी वन्दाकः । क्षीरवृक्षः पीतकः । स एव कशेरुकः । बिम्बी रक्तफला । शेलुः श्लेष्मातकः । विषमूषिका । किंशुकः पलाशः । तस्य कुसुम एव शाकत्वम् ।

वद्धमूत्रा सरा भङ्गी करीरं स्यादभीरुजम् ॥
सतिक्तं लघु चक्षुष्यं वृष्यं दोषत्रयप्रणुत् ।
तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ॥
मदपित्तविषास्रघ्नो मुञ्जातं वातपित्तजित् ।
स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत् परम् ॥
पालक्या पिच्छिला गुर्वी श्लेष्मळा भेदिनी हिमा
मदघ्न्युपोदका चुचुग्राही तौ पूर्ववत्तथा ॥
विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ।
जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनी॥

चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ।
शाकानां प्रवरा न्यूना द्वितीया किंचिदेव तु ॥
वातपित्तहरा भण्डी पर्वणी पर्वपुष्पिका ।

भञ्जी यद्धमूता सरा च । अभीरुजं करीरं शतावर्यङ्कुरं तत् तिक्तं लघु चक्षुष्यं वृष्यं त्रिदोषनाशनं च। इदमन्यत् करीरम् । तण्डुलीयः शीतवीर्यो रूक्षो मधुरविपाकरसो लघुः मदादिनाशनश्च । मुञ्जातं वातपित्तनाशनं स्निग्धत्वादिगुणयुक्तं अत्यर्थशुक्रकरं च। मुञ्जातः काश्मीरेषु महोयकः । पालक्या पिच्छिलत्वादिगुणपञ्चकयुक्ता । उपोदका मदनाशिनी। उपोदकामयाळीचसुरुक्षापोतकीरमृता। चुञ्चुः सङ्ग्रहणः तौ तूपोदकाचुञ्चू पूर्ववत् पालक्यागुणावित्यर्थः । तु-शेति समुच्चये। विदारी वातपित्तनाशिनी मूत्रळा मधुरा शीतवीर्या च । विदारी सृगालिका । जीवन्तीशाकं जीवनत्वादिगुणयुतम् । या जीवन्ती मधुरा सा शीतवीर्या एवंगुणा शाकानां च श्रेष्ठा । द्वितीया अनधुरा सा एभिरेव, गुणैः किंचिन्न्यूना भवति । भण्ड्यादित्रयं वातपित्तहरम् । भण्डी मञ्जिष्ठा । पर्वपुष्पी नागदन्ती ॥

कूश्माण्डतुम्बकालिङ्गकर्कारूर्वारुनिन्दिशम् ॥
तथा त्रपुसचीनाकचिर्भिटं कफवातकृत् ।
भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ॥

कूश्माण्डादिकं वातश्लेष्मकरं, भेदनं, विष्टम्भकरमभिष्यन्दि, स्रोतःस्रावकं, मधुररसविपाकं, गुरु च । उर्वारुः कर्कटिका ॥

एतेषां निर्धारयति

वल्लीफलानां प्रवरं कूश्माण्डं वातपित्तजित् ।
बस्तिशुद्धिकरं वृष्यं त्रपुसं त्वतिमूत्रळम् ॥
तुम्बं रूक्षतरं ग्राहि कालिङ्गोर्वारुचिर्भिटम् ।
बालं पित्तहरं शीतं विद्यात् पक्वमतोऽन्यथा ॥

सर्वेषां वल्लीफलानां कूश्माण्डं प्रशस्तम् । वातपित्तनाशनं बस्तिशोधनं वृष्यं च । त्रपुसं पुनरतिमूत्रळम् । तुम्बमलाबु अत्यर्थं रूक्षं संग्रहणं च । कालिङ्गोर्वारुचिर्भिटं च बालमपूर्णरसादि पित्तहरं शीतवीर्यं च। पक्वमतो बालाद्विपरीतम् ॥

शीर्णवृन्तं तु सक्षारं पित्तळं कफवातजित् ।
रोचनं दीपनं हृद्यमष्ठीलानाहनुल्लघु ॥

शीर्णवृन्तं शीर्णं वृन्तं वल्लीबन्धनस्थानं शुष्कं यस्य यत् पाकमतिक्रम्य वर्तते तदीषत्क्षारं, पित्तकरं, वातश्लेष्मनाशनं, रुचिकरं, हृद्यं, अष्ठीलां आनाहं च नाशयति लघु च । अष्ठीला वक्ष्यमाणलक्षणा ॥

मृणाळविसशालूकशृङ्गाटककशेरुकाः ।
नन्दीमाषककेलूटक्रौञ्चादनकलोड्यकम् ॥
सतरूदं कदम्बं च रूक्षं ग्राहि हिमं गुरु ।

मृणाळादिकं रूक्षं संग्रहणं, शीतवीर्यं, गुरु च । मृणाळं विसाङ्कुरम् । शालूकं पद्मकन्दम् । कशेरुकं प्रसिद्धं मध्यदेशे । क्रौञ्चादनं काश्मीरेषु केबुकमन्यत्र कनाविकम् । अम्लोड्यं हृस्वमुत्पलम् । पद्मबीजमन्ये । कदम्बः कन्दविशेषः ॥

कळम्बुनाळिकामाषकठिञ्जरकुतुम्बकम् ॥
चिल्लीलट्वाकनिष्पावकुरुटकगवेधुकाः ।
यातुका सालकल्याणी श्रीपर्णी पीलुपर्णिका ।
कुमारी जीवलोणीकायव शाकसुवर्चलाः ।
कुश्माण्डनीलिनी स्वर्चा वृकधूमकलक्ष्मणा ॥
आळूपानि च सर्वाणि तथा सूप्यानि लक्ष्मण
जीवन्तिकश्चुचुपर्णीप्रपुन्नाटकुबेरकम् ॥
स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ।
शीतळं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ॥
स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषळम्

कळम्ब्वादिकं मधुरं, ईषल्लवणं, रूक्षं, वातश्लेष्मकं गुरु, शीतवीर्यं, मूत्रं पुरीषं च सृजति बहिःक्षिपति, विष्टभ्यैकस्मिन् जठरप्रदेशे पिण्डीभूय जरां यातीति। प्रायोग्रहणं एतेषां मध्ये केचिन्नैवंस्वरूपा इति ज्ञापनार्थम् । तेषां पर्याया निखण्डज्ञानात् देशभाषासंस्करणाच्च किंचित् ज्ञायन्ते । किंचित् उच्यन्ते । कळम्बुः कालिका । नाळिका कपोतचरणा । माषं गान्धारी । काश्मीरेषु शिलः । चिल्ली तण्डुलीयकविशेषः । लट्वाको गुग्गुलुः । निष्पावः राजशिम्बी । पीलुपर्णिका मूर्वा । लोणिका काश्मीरेषु

लोनारा । यवशाकः क्षारपत्रकम् । काश्मीरेषु कोणीकः । आलूपानि बहुविधानि देशेषूक्तानि । तानि सर्वाणीह गृह्यन्ते । सूप्यानि मुद्गादिसस्यपर्णानि । लक्ष्मणा मधुयष्टी । जीवन्ती रक्तनाळो वास्तुकः । प्रपुन्नाटः चक्रमर्दकः। कुवेरकः कठिञ्जरभेदः । कोमीरेति केचित् । एतच्च सर्वं स्विन्नं, निष्पीडितरसं, अतिशयेन बहुस्नेहं च नाल्पपथ्यम् ॥

लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता
तर्कारीवरणं स्वादु सतिक्तं कफवातजित् ।
वर्षाभ्वौ काळशाकं च सक्षारं कटु तिक्तकम्
दीपनं भेदनं हन्ति गरशोफकफानिलान् ।
दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः ॥

सूक्ष्मपत्रा जात्यैव या चिल्ली सा वास्तुकसमानगुणा। तर्कारी वरणं च मधुरतिक्तं, वातश्लेष्मनाशनं च । वर्षाभ्वौ पुनर्नवे काळशाकं च ईषत् क्षारं, रसे च कटुकतिक्तं, अग्निदीपनं, भेदनं गरादींश्च नाशयति । तर्कारी अग्निमन्थः । चिरिबिल्वाङ्कुराः अग्निदीपनाः, वातश्लेष्मनाशनाः, सराश्च ॥

लघुरुष्णा सरा तिक्ता सोरुपूका च लाङ्गली।

ऊरुपूकं लाङ्गली च लघुनी, उष्णवीर्ये, सरे, तिक्ते च । ऊरुपूकं रक्तैरण्डः । लाङ्गली इन्द्रपुष्पिका ॥

वातळौ कटुतिक्ताम्लौ भेदिनौ तिलवेतसौ ॥
तद्वत् पञ्चाङ्गुलो वंशकरीरास्तु विदाहिनः ।
वातपित्तकरा रूक्षाः कटुपाकाः कफापहाः ॥

तिलवेतसपत्रे वातळे, रसे कटुतिक्ताम्ले, भेदने च । तद्वत् तिलवेतसगुणः पञ्चाङ्गुलः शुक्लैरण्डः । तस्य पत्रे शाकत्वम् । वंशकरीराः वंशाङ्कुराः, विदाहिनः, वातपित्तकराः, रूक्षाः, विपाके कटुकाः, कफनाशनाश्च ॥

बिल्वरास्नाबलाशाकं वातघ्नमतिसारजित् ।
वायुं वत्सादनी हन्यात् कफं गण्डीरचित्रकौ ॥
पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ।

बिल्वादिशाकत्रयं वातनाशनं, अतीसारनाशनं च । वत्सादनी वायुं नाशयति । वत्सादनी कचेयकः । गण्डीरचित्रकशाकौ कफं नाशयतः । पत्तूरो दीपनादिगुणयुक्तः । "मत्स्याक्षकस्तु पत्तूरः पत्रजः प्रिय इत्यपि" ॥

क्रिमिकासकफोत्क्लेदान् कासमर्दो जयेत् सरः
रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम् ।
सक्षारं मधुरं स्निग्धमुष्णं गुरु च सार्षपम् ॥
शाकानामवरं बद्धविण्मूत्रं सर्वदोषकृत् ।

कासमर्दकः सरः, क्रिम्यादींश्च नाशयति । उत्क्लेदः स्रोतसां मालिन्येनार्द्रत्वम् । कुसुम्भशाकं रूक्षं, उष्णवीर्यं, गुरु, पित्तकरं, सरं च । सार्षपं शाकं ईषत्क्षारगुणयुक्तं, मधुरत्वादियुक्तं, शाकानां च अवरं अश्रेष्ठं, मूत्रं विशं च बध्नाति, त्रिदोषकरं च ॥

यद्बालमव्यक्तरसं किंचित्क्षारं सतिक्तकम्॥
तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ।
गुल्मकासक्षयश्वासव्रणनेत्रगळामयान् ॥
स्वराग्निसादोदावर्तपीनसांश्च—

बालं सूक्ष्मं मूलकं त्रिदोषनाशनं, लघु, किंचिदुष्णवीर्यं, गुल्मादींश्च नाशयति । कीदृग्बालमित्युक्तं अत आह । यत् बालं अव्यक्तरसं अस्फुटमाधुर्यादि, ईषत् क्षारं क्षारं जिह्वादिशैत्यकृत्, किंचिद्व्यक्ततिक्तत्वं च । एवंविधं सूक्ष्मं मूलकमेवंगुणयुक्तम् । अयं जातिविशेषः । तथा च बालमूलकस्य कन्दमूलकबीजदेशकालसंस्थानपरिणतिविशेषाद्भिन्नजातीयत्वं प्रसिद्धमेव काश्मीरेषु ॥

—महत् पुनः ।
गुरूष्णकटुकं स्वादुविपाकं सर्वदोषकृत् ॥
गुर्वभिष्यन्दि च स्निग्धसिद्धं तदपि वातजित्
वातश्लेष्महरं शुष्कं सर्वमामं तु दोषळम् ॥

महत् पुनः स्थूलं, मूलकं, गुरूष्णवीर्यं, रसे कटुकं, विपाके मधुरं, त्रिदोषकरं च । तदेवंगुणयुक्तमपि घृतमांसादिना सिद्धं गुर्वभिष्यन्दि, वातजिच्च । शुष्कं च महदपि मूलकं वातश्लेष्महरम् । सर्वं च मूलकं बालं महच्च शुष्कमार्द्रं चाममनग्निपक्वं सदोषकृद्देहस्यापथ्यत्वात् । दोषधत्वादीनामुत्क्लेशप्रायपरिणामकरं च । अग्निसिद्धं तु यथास्वरूपमुक्तम् ॥

कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ।

पिण्डालू रसे कटुकः, वीर्ये उष्णः, वातश्लेष्मनाशनः, पित्तवर्धनश्च ॥

कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणाः ॥
धान्यतुम्बुरुशैलेययवानीशृङ्गिबेरकाः ।
पर्णासो शृङ्गनोऽजाजी जीरकं गजपिप्पली ॥
फणिज्जार्जकजम्बीरखराह्वाकालमालिकाः ।
दीप्यकः क्षवकद्वीपिवस्तगन्धादि बद्धविट् ॥
रसे पाके च कटुकं दोषोत्क्लेशकरं लघु ।
विदाहि रूक्षतीक्ष्णोष्णं दृक्शुक्रक्रिमिनाशनम्
वर्गो हरितकाख्योऽयमुपदंशेषु युज्यते ।
वासनो व्यञ्जनानां च हृद्यो दीपनरोचनः ॥

कुठेरादिकं वस्तगन्धान्तं हरित एवोपयोगाद्धरितवर्ग एवोच्यते । आदिग्रहणादन्येषामेवंरसादियुक्तानामेवमुपयोगवतां ग्रहणम् । अस्य चाऽग्निपक्वस्योपयोगे गुणविशेषप्रादुर्भावः । कुठेरादिकं हरितकं विशं पुरीषं बध्नाति श्लथयति। रसे विपाके च कटुकम् । दोषान् वातादीनुत्क्लेशयति, यत् किंचित् कोपयन् स्थानाच्चलयति तदुत्क्लेशकरम् । लघु, विदाहि, रूक्षं, उष्णवीर्यं, तीक्ष्णं, दृगादिनाशनं च । अयं च कुठेरादिर्यो हरितकाख्यो वर्ग उपदंशेषु युज्यते । उपदंशो येन सहान्नं भोक्तुं युज्यते । व्यञ्जनानां च नानाविधानां भोजनोपयोगिनां वासनः सौगन्ध्यादकरः, हृद्योऽग्निदीपनो, रोचनश्च। कुठेरकः वैकुण्ठकः । शिग्रुः शोभाञ्जनम् । सुमुखः कटुपत्रकः । आसुरी राजिका । फणिज्जकः फणी । अर्जकः जाल्या सूक्ष्मपत्रः । जम्बीरः खरपत्रः । काश्मीरेषु तुम्बुरुः । खराह्वा हस्तिमयूरकः । कालमालः कृष्णकुठेरकम् । दीप्यकः अजमोजः ॥

हिध्माकासविषश्वासपार्श्वरुक्पूतिगन्धहा ।
सुरसः सुमुखः शोफा ध्महा धानका पुनः ॥
कषायतिक्तमधुरा मूत्रला न च पित्तकृत् ।
खराह्वा बस्तिशूलघ्नी चित्रको दीपनः परम् ॥

सुरसस्तु हिध्मादीन्नाशयति । सुमुखः श्वयथुदुर्गन्धौ नाशयति । धानका रसे कषायतिक्तमधुरा, मूत्रकरी, पित्तं च न करोति । खराह्वा बस्तिशूलं नाशयति । चित्रकोऽत्यर्थमग्निदीपनः ॥

पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः ।
तीक्ष्णोष्णो लशुनः कन्दे कटुपाकरसः सरः
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः
भग्नसन्धानकृत् बल्यो रक्तपित्तप्रदूषणः ॥
किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान् ।
सहिध्मापीनसश्वासकासान् हन्ति रसायनम् ॥

लशुनः पत्रे ईषत् क्षारो, मधुररसश्च। मध्ये पत्रात् कठिने भागे मधुररसः, पिच्छिलश्च । कन्दे मूले तीक्ष्णोष्णवीर्यो, रसे विपाके च कटुकः, सरो, हृद्यः, केश्यत्वादिगुणयुक्तः, किलासादींश्च नाशयति । किलासः श्वित्रः । रसायनमिव रसायनं देहहितम् ॥

पलण्डुस्तद्गुणैर्न्यूनो विपाके मधुरस्तु सः ।
कफं करोति नो पित्तं केवलानिलनाशनः ॥

पलण्डुस्तद्गुणैर्लशुनगुणैर्न्यूनः हीनः । विपाके तु मधुरः कफं करोति पित्तं न करोतीति सम्बन्धः । न करोतीति पित्तं न विनाशयतीति तात्पर्यार्थः । वातं च केवलमन्यदोषासंसृष्टं नाशयति ॥

दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ।
विशेषादर्शसां पथ्यो भूकन्दस्त्वतिदोषळः ॥

सूरणोऽग्निदीप्तिरुचिकरः, श्लेष्मनाशनो विशदो लघुः, अर्शसां अतिपथ्यश्च । भूकन्दोऽत्यर्थं त्रिदोषकरः । स च प्रसिद्धः ॥

पत्रे पुष्पे फले नाळे कन्दे च गुरुता क्रमात् ।
वरा शाकेषु जीवन्ती सार्षपास्त्ववराः परम् ॥

## इति शाकवर्गः

पत्रादीनां च शाकहरितकयोग्यक्रमात् यथोत्तरं गुरुत्वम् । पत्रशाकं तावत् प्रथममनपेक्ष्य गुरु, ततः पुष्पशाकं, ततः फलशाकं, ततो नाळशाकं, ततश्च कन्दशाकं, इत्येवं हरितकेषु गुरुत्वं विज्ञेयम् । अत्राप्युत्सर्गापवादोपबृंहकवचनादिकं चिन्त्यम् । अत्र शाकानां हरितकानां च येषां नामानि नोक्तानि तेषां देशभाषादिविद्भ्योऽधिगम्यापभ्रंशसंस्कारादुपयोगविशेषाच्च ज्ञातव्यानि । अन्यत्सुबोधम् ॥

इति शाकवर्गः ॥

द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट्।
स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः
निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान्।
तृष्णाकासज्वरश्वासस्वरभेदक्षतक्षयान् ॥
उद्रिक्तपित्तान् जयति त्रिदोषान् स्वादु डाडिमम्
पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ॥

फलान्युच्यन्ते । तेषां च द्राक्षा श्रेष्ठा । अतः सैवादौ गृह्यते । द्राक्षा सर्वफलानामुत्तमा, वृष्यत्वादिगुणयुक्ता, लघुः, अनिलपित्तादींश्च नाशयति । सकषाया माधुर्यात्स्वल्पं कषायत्वं तत्रास्तीत्यर्थः । स्वादु मधुरं डाडिममधिकपित्तं सन्निपातं नाशयति । अम्लं डाडिमं न पित्ते विरुद्धं, नाति चोष्णवीर्यं, वातश्लेष्मनाशनं च ॥

सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ।

सर्वं डाडिमम्। मधुरमम्लं मधुराम्लं च हृद्यत्वादिगुणयुक्तम् ॥

मोचखर्जूरपनसनालिकेरपरूषकम् ॥
आम्राततालकाश्मर्यराजादनमधूकजम् ।
सौवीरबदराङ्कोलफल्गुश्लेष्मातकोद्भवम् ॥
वातामाभिषुकाक्षोळमुकूलकनिकोचकम् ।
ऊरुमाणं प्रियाळं च बृंहणं गुरु शीतळम् ॥
दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ।
स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् ॥

मोचादि प्रियाळान्तं बृंहणत्वादिगुणयुक्तम् । मोचं कदळीफलं । आम्रातकं पीतनकम् । राजादनं वानरप्रियम्। सौवीरं कर्णिकबदरम् । क्षतः उरःक्षतः । क्षयो धातुक्षयः ॥

नाळिकेरं गुरु स्निग्धं पित्तघ्नं स्वादु शीतळम् ।
बलमांसकरं हृद्यं बृंहणं बस्तिशोधनम् ॥
मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतळम् ।
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥
स्निग्धं स्वादु कषायं च राजादनफलं गुरु ।

सुबोधम् ।

फलं तु पित्तळं तालं सरं काश्मर्यजं हिमम् ॥
शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ।
मधूकजमहृद्यं तु बदरं सरणात्मकम् ॥
वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम् ।
परं वातहरं स्निग्धमनुष्णं तु प्रियाळजम् ॥
प्रियाळमज्जा मधुरो वृष्यः पित्तानिलापहः ।
कोलमज्जा गुणैस्तद्वत्तृट्छर्दिःकासजिच्च सः॥

तालं फलं पित्तलं सरं च। काश्मर्यजं हिमादिगुणम् । मधूकफलमहृद्यम् । बदरं सरणशीलम् । वातामादीनां गुणविशेषप्रदर्शनपरं निर्द्धारणम् । वातामादिकं पित्तश्लेष्मकरमत्यर्थमुष्णं च वातहरं स्निग्धं च । प्रियाळफलस्य शीतवीर्यत्वापवादोष्णत्वशङ्कायामिदमुच्यते। अनुष्णमिति। प्रियाळमज्जा प्रियाळबीजः । स च मधुरत्वादिगुणयुक्तः । बदरमज्जा गुणैस्तद्वत् प्रियाळमज्जवत् । बदरस्य तु विशेषः तृडादिनाशकत्वम् ॥

तिन्दुकाश्मन्तकासीनफलिनीबिम्बितोदनम् ।
टङ्काश्वकर्णबकुळगाङ्गेरुधवधन्वनम् ॥
श्वेतपाककपित्थानि सिञ्चतीभव्यजाम्बवम् ।
क्षीरिवृक्षभवं बीजं पौष्करं कफपित्तजित् ॥
कषायमधुरं रूक्षं शीतळं गुरु लेखनम् ।
विबन्धाध्मानजननं स्तम्भनं वातकोपनम् ॥

तिन्दुकादि पुष्करबीजान्तं कफपित्तजित्त्वादिगुणयुक्तम्। सिञ्चती काश्मीरेषु वृक्षबदरी । सा च मधुरा । पुष्करबीजस्यानभिपक्वस्योपयोगे फलगुणत्वम् । क्षीरिवृक्षा ये शस्त्रादिक्षताः क्षीरं स्रवन्ति । विबन्धः स्रोतोभिर्दोषादीनामवहननम् ॥

कपित्थमामं कण्ठघ्नं कषायाम्लं त्रिदोषकृत् ।
पक्वं रुच्यं कषायाम्लं स्वादु हिध्मावमिप्रणुत् ॥
दोषघ्नं षाडवारिष्टरागयुक्तिषु पूजितम्।
विषघ्नमुभयं ग्राहि कपित्थान्येवमादिशेत् ॥

कपित्थमाममपक्वं स्वरनाशनं, रसे कषायाम्लं, त्रिदोषकरं च । पक्वं रुचिकरं, रसे च कषायाम्लं, मधुरं, हिध्माच्छर्दिनाशनं, त्रिदोषघ्नं, षाडवादियोजनासु च पूजितम् । उभयमामं पक्वं च विषनाशनं, सङ्ग्रहणं च । एवं कपित्थान्यादिशेत् । रसविशेषेण नानाविधानि कपित्थानि

सम्भवन्ति । तान्यनया दिशा कल्पयेदित्यर्थः । तेन कषायाम्लं सदैवामकपित्थगुणं, माधुर्यानुविद्धं तथैव पक्वगुणमिति॥

**बृंहणं वातपित्तघ्नं स्निग्धं सिश्वतिकाफलम् ।**
**भव्यं विशदमम्लं च जाम्बवं त्वतिवातळम् ॥**
**विष्टम्भकृदकण्ठ्यं च साम्लं तु क्षीरिवृक्षजम ।**
**पित्तश्लेष्मघ्नमम्लं च वातळं चाक्षकीफलम् ॥**
**बालं कषायकट्वम्लं रूक्षं वातास्रपित्तकृत् ।**
**संपूर्णमाम्रमम्लं तु रक्तपित्तकफप्रदम् ॥**
**स्वादु साम्लं गुरुस्निग्धं मारुतघ्नमपित्तळम् ।**
**हृद्यं पर्यागतं श्लेष्ममांसशुक्रबलप्रदम् ॥**
**सहकाररसो हृद्यः सुरभिस्निग्धरोचनः ।**
**दीपनः पित्तवातघ्नः शुक्रशोणितशुद्धिकृत् ॥**

सिश्वतिकाफलं बृंहणत्वादिगुणयुक्तम् । भव्यमम्लं सविशदं च जाम्बवमतिवातकरं, विष्टम्भकरं, स्वरघ्नं च । क्षीरिवृक्षफलं साम्लं ईषदम्लम् । अक्षकीफलं पित्तश्लेष्मनाशनं, अम्लरसं, वातळं च । आम्रं चूतं बालमसंपूर्णस्वरूपं रसे कषायकटुकाम्लं, रूक्षं, वातास्रपित्तकरं च । पर्यागतमतिक्रान्तपाकं स्वादु साम्लं मधुराम्लरसं, गुरु, स्निग्धं, वातं नाशयति, पित्तं च न करोति, हृद्यं, श्लेष्मादिकरं च । सहकाराख्याद्रस आम्रादेव निष्कास्यते । अतोऽत्रोच्यते । सहकाररसो हृद्यत्वादिगुणयुक्तः ॥

**कषायं रोचनं हृद्यं वातळं लवलीफलम् ।**
**गुर्वग्निसादकृद्बिल्वं दोषळं पूतिमारुतम् ॥**
**पक्वं बालं पुनस्तीक्ष्णं पित्तळं लघु दीपनम् ।**
**वातश्लेष्मघ्नमुष्णं च स्निग्धं ग्राह्युभयं परम्॥**
**वृक्षाम्लं ग्राहि रूक्षोष्णं लघु दीपनरोचनम् ।**
**वातश्लेष्महरं किञ्चिदूनं कोशाम्लजं ततः ॥**
**फलं करञ्जं विष्टम्भि पित्तश्लेष्माविरोधि च।**
**गुरूष्णमधुरं रूक्षं केशघ्नं च शमीफलम् ॥**

लवलीफलं कषायरसं रोचनत्वादिगुणयुक्तम् । बिल्वं गुरु अग्निसादकरं, त्रिदोषकरं, पूतिमारुतं च । पूतिगुणं दुर्गन्धकरं च मारुतमुद्गारादौ करोतीत्येवंगुणं पक्वं बिल्वम् । बालं पुनरपक्वं तीक्ष्णत्वादिगुणयुक्तम् । उभयं बालं पक्वं च स्निग्धं परमत्यर्थं च सङ्ग्रहणम् । वृक्षाम्लं तिन्तिणीक सङ्ग्रहणत्वादिगुणयुक्तम् । कोशाम्रजं फलं तथा वृक्षाम्लगुणैः किञ्चिदूनम् । करञ्जफलं विष्टम्भि, पित्तश्लेष्माणि च विरुद्धम् । शमीफलं मधुरं, रूक्षं, केशघ्नं, गुरूष्णवीर्यं च ।

**कटुपाकरसं पीलु तीक्ष्णोष्णं भेदि पित्तळम् ।**
**क्रिमिगुल्मोदरगरप्लीहार्शःकफवातजित् ॥**
**सतिक्तं स्वादु यत् पीलु नात्युष्णं तत्त्रिदोषजित्**
**नीपं शताक्षिकं प्राचीनागरं तृणशूल्यजम् ॥**
**अस्मादल्पान्तरगुणमैङ्गुदं सविकङ्कतम् ।**
**त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित्**
**बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।**
**लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ।**
**आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान्**
**गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत्**

पीलुफलं पाके रसे च कटुकं, तीक्ष्णत्वादिगुणयुक्तं क्रिम्यादीन्नाशयति । मधुरमीषत्तिक्तं च जात्या पीलु, तत् नात्युष्णवीर्यं, त्रिदोषघ्नं च । नीपादिविकङ्कतान्तं फलमस्मात् सतिक्तस्वादुपीलुतोऽल्पान्तरगुणं स्तोकगुणमित्यर्थः । नीपो धूळिकदम्बः प्राचीनागरकमामलकसदृशं कृष्णलोहितम् । मातुलुङ्गफलस्य त्वक् रसे तिक्तकटुका, स्निग्धा, वातनाशिनी च । मांसं त्वचोऽन्तः बृंहणं, मधुरं वातपित्तहरं, गुरु च । तस्य मातुलुङ्गस्य केसरमन्तर्मध्यभवं लघु कासादींश्च नाशयति ॥

**भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतळम् ।**
**तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥**
**स्वाद्वम्लं शीतमुष्णं च द्विधा पारावतं गुरु ।**
**रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम् ।**
**पक्वमाशु जरां याति नात्युष्णं गुरु दोषळम्**
**द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥**
**गुरूष्णवीर्यं वातघ्नं सरं सकरमर्दकम् ।**
**तथाम्लं कोलकर्कन्धुलिकुचाम्रातकारुकम् ॥**
**ऐरावतं दन्तशठं सतुदं मृगलण्डिकम् ।**
**नातिपित्तकरं पक्वं शुष्कं च करमर्दकम् ॥**

दीपनं भेदनं शुष्कमम्लिकाङ्कोलयोः फलम् ।
तृष्णाघ्नं श्रमघ्नं छेदि लघ्विष्टं कफवातयोः ॥

भल्लातकस्य त्वक्, मांसं च बृंहणत्वादिगुणयुक्तम् । तस्य चास्थि तैक्ष्ण्येनाग्निसमं, मेधायै हितमत्यर्थं वातश्लेष्महरम्। पारावतं द्विधा द्विप्रकारं मधुरमम्लं च । यथासंख्येन मधुरं शीतवीर्यं, अम्लं उष्णवीर्यम् । उभयमपि गुरु, रुचिकरं, अत्यग्निशमनं च । मधुरमारुकं रुचिकरम् । पक्वं च सत् सुजरं, किंचिदुष्णवीर्यं, किंचिद्गुरु, किंचिद्दोषळं च । दोषळं अपथ्यम् । "आरुकं वीरसेनं च वीराचीनारुकं तथा। विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम्"। द्राक्षापरूषकं चार्द्रमशुष्कं करमर्दकं चाम्लं सत् पित्तश्लेष्मकरं, गुरुत्वादिगुणयुक्तं च । करमर्दकं सुषेणम् । कोलादिकं मृणालगिडकान्तं अम्लं सत् तथेत्यम्लद्राक्षादिवदित्यर्थः । ऐरावतं नागरङ्गं, दन्तशठं जम्बीरं, कर्कन्धुर्हस्वबदरी । करमर्दकं पक्वं शुष्कं च नात्यर्थं पित्तकरम् । अम्लिकाफलं अङ्कोलफलं च शुष्कं दीपनं, भेदनं, तृष्णादिनाशनं, कफवातयोश्च पथ्यम् ॥

फलानामवरं तत्र लिकुचं सर्वदोषकृत् ।
हिमानिलोष्णदुर्वातव्याळलालादिदूषितम् ॥
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ।
अन्यधान्ययुतं हीनवीर्यं जीर्णतयाति च ॥
धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमळम् ।
असंजातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ॥
प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ।

## इति फलवर्गः ॥

सर्वेषां च फलानामवरमप्रधानं लिकुचं त्रिदोषकरं च । इत्यन्नस्वरूपविज्ञाननिष्पत्तौ धान्यादिकमन्नं समाहृत्य हिमानिलेत्यादिनोच्यते । एवंविधं धान्यं त्यजेत् । हिमादिदूषितं अनिलेनातिवृद्धेन केदारस्थं दूषितमुष्णेन चातपादिना दुर्वातेन च पुरोवातादिना । तथा व्याळानां सर्पादीनां लालया दूषितम् । आदिग्रहणेन शवकोथादीनां ग्रहणम् । तथा जन्तुभिः क्रिम्यादिभिर्जुष्टं सेवितं जले मग्नमाशिलम् । अभूमौ विपरीतभूमौ जातमभूमिजम् । या यस्य धान्यस्योचिता भूमिः ततोऽन्या विपरीता । तथानार्तवमप्राप्तसमयम् । यस्मिन्नृतौ यस्य धान्यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन्नुत्पादितमित्यर्थः । तल्लक्षणं च रसादीनामपरिपूर्णत्वेन विज्ञेयम् । अन्येन च विजातीयेन धान्येन संयुक्तं केदारे जातम् । अतिजीर्णतया अतिपुराणत्वेन च हीनवीर्यं नष्टशक्ति । एवंविधं धान्यं त्यजेत् । तथा शाकमपि त्यजेत् । कीदृशं रूक्षसिद्धं रूक्षमेव सिद्धं रूक्षसिद्धं निःस्नेहसिद्धमित्यर्थः । अथवा रूक्षेण काञ्जिकादिना सिद्धं रूक्षसिद्धम् । अकोमळं कठिनम् । स्वभावतः संस्कारतो वा । असंजातरसमपरिपूर्णस्वरूपमित्यर्थः । तथा सर्वं शाकं शुष्कं त्यजेत् । मूलकं वर्जयित्वा । प्रायेण बाहुल्येन फलमप्येवंविधं त्यजेत् । द्राक्षादेश्च शुष्कस्यापि प्रयोगो दृश्यत इति ज्ञापनार्थं प्रायोग्रहणम् । तथा फलं सर्वमाममप्राप्तपाकं त्यजेत् । बिल्वं तु वर्जयित्वा । तस्यामस्यापि प्रयोगः । अत्र यथायोगं पूर्ववद्योज्यम् । अत्रापि फलानामप्रसिद्धानां प्रसिद्धानां च येषां नामानि नोक्तानि तानि नानादेशकुलेभ्योऽपभ्रंशसंस्कारादिनाधिगन्तव्यानि ॥

इति फलवर्गः ॥

शूकशिम्बिजपक्वान्नमांसशाकफलाश्रयैः ।
वर्गैरन्नैकदेशोऽयं भूयिष्ठमुपयोगवान् ॥
निर्दिष्टो रसवीर्याद्यैर्यथास्वं कर्मसाधने ।
न शक्यं विस्तरेणापि वक्तुं सर्वं तु सर्वथा ॥
हिताहितत्वेऽप्येकान्तनियमोऽस्मादनिश्चितः ।
मात्रायोगक्रियादेशकालावस्थादिभेदतः ॥
ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा ।

शूकधान्यादीनामाश्रयैः षड्भिर्वर्गैरयमन्नस्याहारस्यैकदेशः स्तोकमात्रं निर्दिष्ट इति सन्धेयः । किंभूतोऽन्नैकदेशः? भूयिष्ठं प्राचुर्येणोपयोगो यस्यास्ति । कथं निर्दिष्टः? रसवीर्यविपाकप्रभावसंस्कारादिभिः । यथास्वं कर्मसाधने यथात्मीयकार्यकर्तृत्वे । एकदेशः किमर्थमुक्त इत्यत आह न शक्यमित्यादि । सर्वं वस्तुजातं सर्वथा सर्वेण प्रकारेणापि वक्तुं न शक्यम् । महतापि ग्रन्थसंभारेण न शक्यं, किमुत सङ्क्षेपेणेत्यपिशब्दस्यार्थः । सर्वभावानां च शरीर इदं हितमिदमहितमिति नियमोऽनिश्चितः । कस्मादनिश्चितः? यतो यस्मात्, ते नानाविधा भावास्ततस्ततो मात्रासंयोगक्रियादेशकालस्वभावविषयावस्थाक्रमादीनां भेदात् तथा तथा तेन तेन प्रकारेण नानाविधैर्विशेषैर्दृष्टाः । अतोऽनिश्चि-

